

# CHANDAMAMA

PRESENTS

## "BE A DREAM CHILD" CONTEST

The President of India, Dr. A.P.J.Abdul Kalam, in the course of his interaction with children, has been exhorting them to DREAM for the future of India and its people. Recently, at the end of his address to the nation on January 25, he administered an oath to a group of children. For the sake of our young readers, the 10-point oath is reproduced below.

1. I will pursue my education or work with dedication and I will excel in it.
2. I will teach at least 10 illiterate persons to read and write.
3. I will plant at least 10 saplings and shall ensure their growth through constant care.
4. I will visit rural and urban areas, and permanently wean away at least five persons from addiction and gambling.
5. I will constantly endeavour to remove the pain of my suffering brethren.
6. I will not support any religious, caste or language differentiation.
7. I will be honest and will endeavour to make a corruption free society.
8. I will work for becoming an enlightened citizen, and make my family righteous.
9. I will always be a friend of the mentally and physically challenged and will work hard to make them feel normal, like the rest of us.
10. I will proudly celebrate the success of my country and my people.

Chandamama invites the children of India to write one para each about whatever they have achieved in fulfilling the maximum of the ten points by the next Independence Day. The contest is open to children between 8 and 15.

**ENTER THE CONTEST AND WIN ATTRACTIVE PRIZES!**

**THREE BEST ENTRIES WILL BE PUBLISHED IN OUR NOVEMBER 2004 ISSUE.**

**CLOSING DATE : August 31 2004**

The July 2004 issue will carry rules for participation, details of prizes and coupon to accompany the entries.

भागः उह्यताम्

nutrine

# ओलम्पिक्प्रश्नस्पर्धा




प्रथमपारितोषिकाणि
चित्रग्राहकाणि

द्वितीयपारितोषिकाणि
गणकयन्त्राणि

न्यूट्रिन्चन्दमामा-ओलम्पिक्-प्रश्नस्पर्धा मेमासतः आरब्धा, षट् मासान् यावत् प्रचलिष्यति च । अधः दत्ताः क्रीडासम्बद्धाः प्रश्नाः भवतां ज्ञानम् अभिरुचिं च वर्धयिष्यन्ति । अधः स्थिते प्रश्नपत्रे समुचितानि उत्तराणि विलिख्य पञ्चभिः 'न्यूट्रिन् चोकलेट् एक्लियर्स्'-आवरणैः सह अन्तिमदिनाङ्कात् पूर्वं **Nutrine Chandamama Contest, Chandamama India Limited No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097** इत्येतस्मै सङ्केताय प्रेष्यन्ताम् ।

एषा अखिलभारतीयस्पर्धा । प्रतिमासम् एतस्मिन् पत्रे उत्तरं लिखित्वा प्रेषणेन स्पर्धायां भागः उह्यताम् । प्रतिमासं प्रथमपारितोषिकाणि - ३ कोनिकाचित्रग्राहकाणि । द्वितीयपारितोषिकाणि - १० गणकयन्त्राणि । तृतीयपारितोषिकाणि - ५० न्यूट्रिन्मधुरपुटकाः । पश्चानां मासानाम् अनन्तरं षष्ठस्पर्धायां विशेषपारितोषिकत्वेन 'एसर्'सङ्गणकं दास्यते । तस्मिन् मासे अन्यानि सामान्यपारितोषिकाणि अपि भवन्ति एव । षट्सु मासेषु स्पर्धायां भागम् ऊढवन्तः सर्वे विशेषपारितोषिकप्राप्तये अर्हाः । विशेषपारितोषिकं प्राप्तवते डिसेम्बर्मासे सूचना प्रेषयिष्यते ।

## न्यूट्रिन्चन्दमामा-ओलम्पिक्प्रश्नस्पर्धा - २

**किं भवन्तः जानन्ति?**



प्रथमः ओलम्पिक्दीपः मार्चुमासस्य २५ तमे दिनाङ्के ओलम्पियानगरे प्रवर्तितः । कोस्टास् गोट्सिसोद्धस्वर्याय सः आदौ दत्तः, यश्च तस्मिन् वर्षे जावलिन्क्षेपणस्पर्धायां विजयी जातः । स च दीपः जूनमासस्य दशमे दिनाङ्के भारतं प्रति आगतः आसीत् ।

सावधानतया अधः दत्तान् सर्वान् प्रश्नान् पठित्वा प्रतिप्रश्नम् उत्तरलेखनाय कल्पिते स्थले समुचितस्य उत्तरस्य पुरतः (✔) चिह्नम् अङ्कयन्तु ।

१. ओलम्पिक्मेरथान्स्पर्धायाम् उल्लिखितः महत्तमः वेगः कः ?

☐ २घण्टे १९निमेषाः २कले ☐ २घण्टे ९ निमेषाः २१कलाः ☐ २घण्टे ९निमेषाः ४१कलाः

२. पुरुषीयायां दूरकूर्दनस्पर्धायां कः परमविक्रमं दर्शितवान् ?

☐ चार्लस् ओस्टन् ☐ जेयन् गाल्फियन् ☐ बोब् बियामन्

३. महिलीयायाम् औन्नत्यकूर्दनस्पर्धायां यया परमविक्रमः साधितः तया अतिक्रान्तम् औन्नत्यं किम् ?

☐ १.९५ मीटर् ☐ २ मीटर् ☐ २.०५ मीटर्

४. १९८८तमे वर्षे एशियन्राष्ट्रीये कस्मिन् नगरे ओलम्पिक्स्पर्धाः प्रवृत्ताः ?

☐ टोकियोनगरे ☐ सियोल्नगरे ☐ बीजिङ्ग्नगरे

५. पृष्ठावरणे स्थितायां न्यूट्रिन्विज्ञापिकायां 'T' इत्येतानि आंग्लाक्षराणि कति सन्ति ?

☐ 10 ☐ 16 ☐ 14

**स्पर्धानियमाः** - ● न्यूट्रिन्-चन्दमामासंस्थयोः उद्योगिनः तेषां बान्धवाः वा स्पर्धायां भागवहनाय अनर्हाः । ● न्यूट्रिन्संस्था निर्णायकानां चयने पूर्णाधिकारम् अर्हति । ● भारते जाताः ऊनपञ्चदशवर्षीयाः बालाः स्पर्धायां भागं वोढुम् अर्हाः । ● स्पर्धादिनाङ्कस्य विस्तारे सङ्कोचे च न्यूट्रिन्जनानाम् एव अन्तिमः अधिकारः । ● भागग्राहिणः वयसः दृढीकरणाय जन्मदिनाङ्कप्रमाणपत्रं दद्युः । ● समुचितोत्तरदातारः बहवः सन्ति चेत् 'लाटरी'पद्धत्या पारितोषिकार्हाणां चयनं करिष्यते । ● पारितोषिकभाजः पत्रेण सूच्यन्ते । ● पारितोषिकं वस्तुरूपेणैव, न तु धनरूपेण । ● पारितोषिकरूपेण दत्तानां वस्तूनां 'वारण्टी' निर्मातृसंस्थाधीनम् । ● एकः एव प्रतिमासम् अपि भागं ग्रहीतुम् अर्हति । ● षट्सु मासेषु कस्मिंश्चित् एकस्मिन् एव भागग्रहणम् अपि शक्यते । ● पत्रव्यवहारस्य न अवकाशः । ● स्पर्धापत्रं प्रेषितम् इत्यस्य तात्पर्यं यत् स्पर्धानियमाः सर्वे अङ्गीकृताः इति । ● अन्तिमदिनाङ्कानन्तरं प्राप्तं प्रवेशपत्रं स्पर्धायै न परिगण्यते । ● समुचितम् उत्तरं केनापि न दत्तं चेत् अल्पदोषयुक्तानि पत्राणि पारितोषिकाय परिगण्यन्ते । ● निर्णायकानां निर्णयः एव अन्तिमः ।

**अन्तिमः दिनाङ्कः - ३०, जून् - २००४**

नाम ..........................................................

वयः .................. कक्ष्या .................. जन्मदिनाङ्कः ..................

गृहसङ्केतः (पिन्कोड्सहितः) ..........................................................

हस्ताक्षरम् ..........................................................

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ जून् - २००४ सञ्चिका - ३



भल्लूकमान्त्रिकः

१३



स्वार्थसंवलितः परोपकारः (वेतालकथा)

१९



लालश्रेष्ठिना प्रार्थितः वरः

२६



विष्णुपुराणम् - ६

४९



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं
'Chandamama India Limited'
नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal,
**CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
जुलै - २००४ तः प्रतिकृतिमूल्यं भविष्यति रू. १२/-
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399
Fax: 044-22312447, Mobile: 98412-77347
email : advertisements @ chandamama.org



*संस्थापकौ -*
**चक्रपाणिः नागिरेड्डी च**

# महत्त्वपूर्णा काचित् अपरा घटना

भारतं विशालः प्रजाप्रभुत्वोपेतः देशः । अत्र एषु दिनेषु प्रगतिप्रतिपादिका अपरा अपूर्वा घटना प्रवृत्ता । तां जगत् साश्चर्यम् अपश्यत् । सा च घटना - लोकसभा-निर्वाचनं नाम । केषुचित् राज्येषु लोकसभानिर्वाचनेन सहैव विधानसभानिर्वाचनम् अपि प्रवृत्तम् । सहस्रशः मतदानकेन्द्राणि स्थापितानि । तत्सम्बद्धाः अधिकारिणः समये (न अतिपूर्वम् एव, न वा अतिविलम्बेन) तत्र गतवन्तः । निश्चिते समये मतदानस्य आरम्भः समाप्तिः च अभवत् । एतदर्थम् अपेक्षितानां स्थल-जन-धनसाधनानाम् आयोजनं सुव्यवस्थिततया सम्पन्नम् । क्वचित् मतदानकेन्द्रं प्रति न किमपि वाहनं गन्तुम् अर्हति स्म । तादृशेषु गहनेषु प्रदेशेषु गजादयः जनसाधनादीनि अनयन् । जनाः अपि एतस्मिन् निर्वाचने सोत्साहं भागम् अवहन् । एवं चतुर्दशी लोकसभा इदानीं घटिता । केषुचित् राज्येषु विधानसभा अपि नूतनतया घटिता ।

राजशासनं गते शतके एव समाप्तं प्रायः । तथापि बहुषु देशेषु प्रजाप्रभुत्वं न प्रतिष्ठापितं दृश्यते । सर्वाधिकारिता सैन्यशासनं वा अद्यापि विजृम्भते केषुचित् देशेषु । किन्तु भारतं तु अनन्यसदृशम् ।

निर्वाचनस्य अभ्यर्थिनः चयनं जातिमतादिकम् अवलम्ब्य कृतः दृश्यते तत्र तत्र । 'भारतमाता न मृन्मयी, अपि तु देवमयी' इत्येतत् अरविन्दोवर्यस्य वचनं स्मर्तव्यम् अस्माभिः, यच्च स्वातन्त्र्यसङ्ग्रामस्य आरम्भकाले तेन उक्तम् आसीत् । यदा योग्याः अभ्यर्थिनः चीयन्ते निर्वाच्यन्ते च तदा एव भारतमातुः उपासनं योग्येन क्रमेण विहितं भवेत् ।

*सम्पादकः* - विश्वम्





# सुहृत् खलु भ्रातृसमानः !

कोऽपि स्वादु खाद्यं खादन् दृष्टः चेत् भवतां मनसि का भावना उत्पद्येत ? यः खादति सः महान्तं भागं स्वसमीपे स्थापयित्वा अल्पं भागं यदि भवते दद्यात् तर्हि का भावना भवेत् भवतः मनसि ? प्रायः सर्वे अपि आत्मने महान्तं भागम् एव रक्षन्ति । किन्तु पूर्वं तादृशः अपि कश्चन बालः आसीत्, यश्च षड्वर्षीयः सन्नपि स्वस्य मनसि सर्वदा न्यायभावं समानताभावं च वहति स्म ।

सः बालः कदाचित् मित्रेण सह गृहस्य पुरतः क्रीडन् आसीत् । मित्रस्य वयः अष्टौ वर्षाणि । क्रीडायां मग्नौ आस्तां तौ उभावपि । तदा तस्य माता स्थालिकायाम् एकां रोटिकां स्थापयित्वा बहिः आगतवती । गृहात् बहिः स्वपुत्रेण सह अन्योऽपि अस्ति इति यदा ज्ञातं तदा सा तां रोटिकां द्विधा विभक्तवती ।

स्थालिकां पुत्रस्य हस्ते दत्त्वा रोटिकायाः बृहद्भागं प्रदर्श्य सा उक्तवती - ''एतत् भवते, अन्य भागः भवतः मित्राय'' इति ।

सः बालः स्थालिकायां स्थितं रोटिकाभागद्वयं वीक्ष्य बृहद्भागमेव मित्राय दत्त्वा स्वयं लघुभागं स्वीकृतवान् ।

तस्य माता एतत् दृष्ट्वा आश्चर्येण पृष्टवती - ''किमर्थम् एव कृतं भवता ?'' इति ।

तदा बालः उक्तवान् - ''अम्ब ! भवत्या एव पूर्वम् उक्तम् आसीत् ननु - सुहृदः भ्रातृसदृशाः इति ? अग्रजाय बृहतः भागस्य दानम् एव न्याय्यम् । अनुजेन लघुभागः एव स्वीकार्यः'' इति ।

पुत्रस्य एतत् वचनं श्रुत्वा माता आश्चर्येण स्तब्धा सन्तुष्टा च ।

एषः बालकः एव अग्रे उत्तमः अध्यापकः जातः । ततः मुम्बयीये उच्चन्यायालये न्यायाधीशत्वेन कार्यम् अकरोत् अपि । एषः अस्ति - सुप्रसिद्धः महादेवगोविन्दरानडेमहोदयः ।



# प्रेमनाथस्य चपेटा

प्रेमनाथः कश्चन निर्धनः । तथापि सः प्रतिफलम् अनपेक्ष्य अन्येषां साहाय्यं करोति स्म सर्वदा । जीवननिर्वहणाय आदिनं कार्यं करणीयम् आसीत् तेन । तथापि सः स्वस्य प्रवृत्तिं न त्यक्तवान् ।

प्रेमनाथस्य एतं स्वभावं पश्यता ग्रामपुरोहितेन कदाचित् उक्तम् - ''भवान् तु निर्धनः । अतः कृतस्य साहाय्यस्य प्रतिफलरूपेण किमपि स्वीकरोतु'' इति ।

''साहाय्यस्य प्रतिफलं न स्वीकरणीयं कदापि । मम तु विश्वासः अस्ति यत् अहं यस्य साहाय्यं करोमि सः सर्वदा तत् साहाय्यं स्मरिष्यति, यदा मम आवश्यकता भविष्यति तदा तेन साहाय्यमपि करिष्यते इति'' इति उक्तवान् प्रेमनाथः ।

तस्मिन्नेव ग्रामे कश्चन कृपणः धनिकः आसीत् । सः प्रेमनाथस्य विषयं श्रुत्वा चिन्तितवान् - 'एषः साहाय्यशीलः । मम कार्यादिकम् अनेनैव कारयिष्यामि । यतः एषः प्रतिफलं किमपि नापेक्षते । अतः मया किमपि दातव्यं न भविष्यति'' इति ।

रङ्गनाथस्य माता अस्वस्था आसीत् । प्रतिदिनं तस्याः निमित्तं वैद्यः द्रष्टव्यः आसीत्, औषधं च आनेतव्यम् आसीत् । एतत् कार्यं रङ्गनाथः प्रेमनाथं सूचितवान् ।

रङ्गनाथस्य वाणिज्यं बहुप्रकारकम् आसीत् । अनेकप्रकारकाणां वस्तूनां मूल्यानि ज्ञातुं प्रतिसप्ताहं विपणिः गन्तव्या भवति स्म । प्रेमनाथस्य शिरसि एतत् कार्यमपि आपतितम् । तावदेव न, यस्मै कस्मैचिदपि या कापि वार्ता प्रेषणीया चेत् तदपि प्रेमनाथेनैव कारयति स्म रङ्गनाथः ।

अथ कदाचित् प्रेमनाथस्य पुत्र्याः विवाहः निश्चितः । विवाहं कर्तुं पर्याप्तं धनं न आसीत् प्रेमनाथस्य समीपे । अतः सः त्रिचतुरान् साहाय्यं पृष्टवान् । किन्तु कोऽपि साहाय्यं कर्तुं सिद्धः न जातः ।

तदा ग्रामपुरोहितः उक्तवान् -

''रङ्गनाथेन भवतः साहाय्यं बहुधा प्राप्तम् अस्ति । अतः तमेव पृच्छतु'' इति ।

प्रेमनाथः तद्दिने एव सायं रङ्गनाथगृहं गत्वा उक्तवान् – ''भवतः साहाय्यं प्रष्टुम् आगतः अस्मि'' इति

तस्मिन् समये रङ्गनाथः गणनापुस्तके गणनालेखने मग्नः आसीत् । साहाय्यम् इति शब्दः एव तं व्यग्रम् अकरोत् । ''साहाय्यं कस्य ? कः भवान् ?'' इति प्रेमनाथं पृष्टवान् सः ।

''भवता किम् उच्यमानमस्ति श्रीमन् ? मया भवतः गृहे अनेकानि कार्याणि कृतानि किल ?'' इति वदन् प्रेमनाथः स्वेन कृतानां कार्याणाम् आवलीम् एव उक्तवान् ।

''अहं किमपि न स्मरामि । प्रतिदिनं मम गृहे अनेके जनाः कार्यं कुर्वन्ति । सर्वेषां स्मरणं तु न शक्यम् । भवता उक्तं – 'मम मातुः निमित्तम् औषधम् आनीतम्' इति । तर्हि मम माता एव भवन्तं जानीयात् । तामेव पृच्छाव'' इति उक्तवान् रङ्गनाथः ।

ततः सः प्रेमनाथं मातुः समीपं नीतवान् । सा तु प्रेमनाथं नखशिखान्तं दृष्ट्वा उक्तवती – ''एषः सकृत् दृष्टः इव भासते । एकस्मिन् दिने अनेन उक्तं 'प्रतिदिनम् औषधस्य आनयनं मया न शक्यम्' इति । तद्दिने औषधं न आनीतम् इति कारणात् मम अस्वस्थता अधिका जाता । अतः अहम् एतं सम्यक् निन्दितवती'' इति

अनया घटनया प्रेमनाथः दिग्भ्रान्तः । खेदेन सः ततः प्रस्थितः । मार्गे पुरोहितः मिलितः । प्रेमनाथस्य मुखभावं दृष्ट्वा सः



पृष्टवान् – ''किम् भवत् ?'' इति ।

प्रेमनाथः पुरोहितं सर्वम् उक्तवान् । तदा पुरोहितः किञ्चिद् विचिन्त्य – ''रङ्गनाथः भवन्तं शक्तिहीनं भावयति । भवता बहुधा तस्य पत्न्याः अपि साहाय्यम् आचरितम् । अतः तस्याः समीपं गच्छतु । सा अपि एवमेव यदि व्यवहरेत् तर्हि भवान् कीदृशः इति सम्यक् सर्वान् पाठयित्वा आगच्छतु'' इति उक्त्वा ततः गतवान् ।

पुरोहितस्य वचनम् अनुसरन् प्रेमनाथः साक्षात् रङ्गनाथगृहं गतः । तदा रङ्गनाथः पत्न्या सह वार्तालापे मग्नः आसीत् । प्रेमनाथः उच्चस्वरेण उक्तवान् – ''श्रीमन् ! मया भवतः पत्न्याः अपि साहाय्यम् आचरितं बहुधा । तां पृच्छतु'' इति ।

रङ्गनाथः कुपितः सन् क्रोधेन प्रेमनाथं



पश्यन् पत्नीम् उक्तवान् – "भवत्या एषः कदापि दृष्टः किम् ? एषः वदति – अस्माकं साहाय्यं बहुधा आचरितम् इति" इति।

"दृष्टः इव अस्ति । एकवारम् अहम् एतं कदलीपत्रं कर्तयितुम् उक्तवती । एषः दश पत्राणि कर्तयित्वा केनापि व्याजेन ततः निर्गतः । एषः महानीचः" इति उक्तवती रङ्गनाथस्य पत्नी ।

प्रेमनाथः तदा रूक्षस्वरेण उक्तवान् – "पश्यन्तु, अहं परिश्रमेण जीवामि । यदा समयः लभ्यते तदा प्रतिफलापेक्षां विना अन्येषां साहाय्यं कर्तुम् इच्छामि । तथैव बहुवारम् अत्रापि कृतम् । किन्तु मम साहाय्यं भवन्तः सर्वे विस्मृतवन्तः इत्येतत् तु मयि दुःखं जनयति" इति ।

एतत् श्रुत्वा रङ्गनाथः उच्चैः हसन् उक्तवान् – "श्रीमतां गृहे यदि कार्यं क्रियते तर्हि गौरवं वर्धते । अत एव केचन मादृशानां धनिकानां साहाय्यं कर्तुम् इच्छन्ति । यदि भवादृशः स्मर्तव्यः इति इच्छा तर्हि तादृशं कार्यं भवता करणीयं येन सर्वदा अस्माभिः भवान् स्मृतः भवेत्" इति ।

"मया कृतस्य साहाय्यस्य प्रशंसा करणीया इति मया कदापि न उच्यते । कृतः उपकारः अपि न स्मर्यते यत् तदेव मम दुःखस्य हेतुः" इति उक्तवान् प्रेमनाथः ।

रङ्गनाथः पुनः उक्तवान् – "अत एव प्राज्ञाः वदन्ति – अणुमात्रस्य लवणस्य योजनेनापि घटमितं क्षीरं नश्यति इति । भवतः विषये अपि एवमेव जातम्" इति ।

"श्रीमन् ! इदानीम् सः विषयः मास्तु । मम पुत्र्याः विवाहः निश्चितः । तदर्थं धनस्य आवश्यकता अस्ति । कृपया साहाय्यं करोतु किञ्चित् । भवतः साहाय्यम् आजीवनं स्मरिष्यामि अहम्" इति बहुधा दैन्येन रङ्गनाथं प्रार्थितवान् प्रेमनाथः ।

तदा रङ्गनाथेन उक्तम् – "यस्य परिचयः एव नास्ति तादृशस्य साहाय्यं कथं कर्तुं शक्येत" इति ।

तस्य उत्तरेण आगतं क्रोधं निरोद्धुम् अशक्तः प्रेमनाथः रङ्गनाथाय चपेटामेकां दत्तवान् । अनेन प्रसङ्गेन स्तब्धः अभवत् रङ्गनाथः । प्रेमनाथः ततः निर्गतः ।

रङ्गनाथस्य अपमाननं कर्तुं ग्रामे कस्यापि धैर्यं नासीत् । अतः अनेन प्रकरणेन कुपितः सः ग्रामाधिकारिणं दृष्ट्वा प्रेमनाथं कृतापराधं

निर्दिश्य उक्तवान् - ''अहङ्कारी प्रेमनाथः मां ताडितवान् । यदि तस्य दण्डनं न भवेत् तर्हि ग्रामे निरङ्कुशता प्रसृता स्यात्'' इति ।

ग्रामाधिकारी 'प्रेमनाथम् आनयन्तु' इति भटान् आज्ञापितवान् । प्रेमनाथः न आगतः । किन्तु ग्रामपुरोहितः आगत्य - ''पुत्र्याः विवाहविषये चिन्ताग्रस्तः प्रेमनाथः अद्य महता ज्वरेण पीडितः अस्ति । मञ्चात् अवतरितुम् अपि अशक्तः सः प्रवृत्तं सर्वं वक्तुं मामेव प्रेषितवान्'' इति ।

''तेन किम् उक्तम् ?'' इति पृष्टवान् ग्रामाधिकारी ।

''प्रेमनाथेन उक्तं यत् रङ्गनाथस्य स्मरणशक्तिः न्यूना अस्ति इति । कृतं साहाय्यं, प्राप्तं ताडनं वा न स्मरति सर्वथा सः इति वदति प्रेमनाथः'' इति उक्तवान् पुरोहितः ।

तत्रैव स्थितः रङ्गनाथः अनेन कुपितः सन् - ''कुतः न स्मर्येत मया ? तस्य नाम प्रेमनाथः इति । तस्य पुत्र्याः विवाहः निश्चितः अस्ति । अतः धनसाहाय्यं प्रार्थयितुं सः मत्समीपम् आगतः । तस्य प्रार्थना मया तिरस्कृता । अतः सः मम कपोले चपेटां दत्तवान्'' इति उक्तवान् ।

''प्रेमनाथः प्रतिफलम् अनपेक्ष्य अस्य रङ्गनाथस्य, तस्य परिवारस्य च बहुधा साहाय्यम् आचरितवान् । किन्तु अयं तत् किमपि न स्मरति । तस्य परिचयोऽपि नास्ति इति एषः उक्तवान् । अपि च अनेन उक्तं यत् तादृशं कार्यं करोतु येन सर्वे भवन्तं स्मरेयुः इति । अतः प्रेमनाथेन अस्मै



चपेटा दत्ता । तेन इदानीं रङ्गनाथः प्रेमनाथं स्मरति । अतः प्रेमनाथेन कृतं कार्यम् उत्तममेव । उत्तमकार्यस्य प्रशंसा करणीया, न तु निन्दा'' इति पुरोहितः ग्रामाधिकारिणम् उक्तवान् ।

एतावति काले ग्रामाधिकारिणा विषयस्य स्पष्टा कल्पना प्राप्ता आसीत् । किन्तु पुरोहितस्य वचनमेव आधारीकृत्य तेन किमपि कर्तुं न शक्यम् आसीत् । अतः ग्रामाधिकारिणा उक्तम् - ''आडम्बरयुक्तैः वचनैः दोषः अपगतः न भविष्यति । दोषः तु सर्वदा दोषः एव । अतः प्रेमनाथः दण्डनीयः'' इति ।

''ग्रामाधिकारिवर्य ! प्रेमनाथः रङ्गनाथस्य साहाय्यं बहुधा कृतवान् । प्रतिफलरूपेण तेन किमपि न स्वीकृतमपि । तस्य सेवायाः यदि प्रतिफलं दापयितुं भवान्

शक्नोति तर्हि दण्डनमपि दातुम् अर्हति'' इति उक्तवान् पुरोहितः ।

ग्रामाधिकारी पुरोहितस्य वचनेन आश्चर्यचकितः सन् उक्तवान् - ''प्रेमनाथस्य विषयं सम्यक् जानाम्यहम् । तस्य साहाय्यं स्वीकृतवत्सु अहमपि अन्यतमः । कृतस्य दोषस्य निमित्तं सः यदि दण्डनीयः तर्हि कृतस्य साहाय्यस्य निमित्तं प्रतिफलम् अपि तस्मै दातव्यम् । ये ये तस्मात् साहाय्यं प्राप्तवन्तः तेभ्यः सर्वेभ्यः अपि प्रतिफलं दापनीयम् । एतत् मम कर्तव्यम् । ग्रामीणेषु केनापि प्रतिफलं न दत्तम् । अतः ते सर्वे अपि दोषिणः । ते इव अहमपि दोषी । अतः एतस्य दण्डनं दातुम् अहं नार्हः'' इति ।

ग्रामाधिकारिणः वचनं तत्र स्थितानां ग्रामीणानां हृदयं प्रविष्टम् । सर्वेऽपि परस्परं वार्तालापं कृत्वा निश्चयं कृतवन्तः यत् सर्वैः मिलित्वा प्रेमनाथस्य पुत्र्याः विवाहार्थं साहाय्यं करणीयम् इति ।

ग्रामाधिकारी पुरोहितम् उक्तवान् - ''भवता उक्तानि वचनानि प्रेमनाथस्य उत भवतः एव इति अहं न जानामि । तथापि भवतः वचने सत्यांशः अस्ति इति तु सत्यम् । प्रेमनाथः एव आगत्य यदि अवदिष्यत् तर्हि एतादृशः निर्णयः प्रायः न अभविष्यत् एव । उचिते समये आगत्य भवान् योग्यं निर्णयं दातुं साहाय्यं कृतवान्, ग्रामस्यापि क्षेमं चिन्तितवान् । अतः भवतः पुरोहितता अन्वर्था अस्ति'' इति ।

रङ्गनाथः अस्माकं वाक्यानि श्रृणोतु इतीच्छया एव तत्र मिलिताः जनाः उच्चैः सम्भाषणम् आरब्धवन्तः - ''ग्रामे वयम् एतावन्तः जनाः स्मः । प्रेमनाथः अस्मासु कमपि साहाय्यम् अप्रार्थयन् महाकृपणं रङ्गनाथं किमर्थं साहाय्यं याचितवान् इति न ज्ञायते'' इति ।

एतैः वचनैः रङ्गनाथस्य मनः विचारग्रस्तम् अभवत् । स्वेन कृतस्य कार्यस्य विषये तस्य लज्जा जाता । अतः सः उक्तवान् - ''प्रेमनाथेन दत्ता चपेटा मह्यं न, किन्तु मयि स्थितस्य स्वार्थभावनायै अहङ्काराय च । इतः परम् अन्यस्मात् स्वीकृतस्य साहाय्यस्य प्रतिफलदानं मम कर्त्तव्यम् । अपि च प्रेमनाथसदृशं जनम् अहं कदापि न दूरीकरोमि । आत्मनः दोषान् परिहर्तुं, ग्रामीणानाम् आदरपात्रतां प्राप्तुं च प्रयासम् अपि करिष्यामि'' इति ।





# भल्लूकमान्त्रिकः

## ६

*[चन्द्रशिलानगरं वशीकर्तुम् उद्युक्तस्य राज्ञः दुर्मुखस्य संहाराय भल्लूकमान्त्रिकः वधकं प्रेषितवान् । एतत् दृष्ट्वा राजा दुर्मुखः अश्वम् आरुह्य अरण्यमार्गेण स्वस्य अङ्गरक्षकेण सह पलायितवान् । नागमल्लः नाम लुण्ठाकनायकः तं पाशेन बद्ध्वा वृक्षतः आकृष्टवान् । तदनन्तरम्.....]*

उभौ लुण्ठाकौ हूङ्कुर्वन्तौ राज्ञः दुर्मुखस्य अङ्गरक्षकस्य पुरतः अभिपतितवन्तौ । एतत् दृष्ट्वा अङ्गरक्षकः भीत्या कम्पमानः अवदत् - ''अयि महाशयौ ! मम कटौ खड्गः यद्यपि अस्ति, तथापि भवतोः कोऽपि अपायः न भविष्यति । कृपया मां न पीडयताम्'' इति ।

लुण्ठाकनायकः नागमल्लः वामहस्तेन अश्वस्य खलीनं निगृह्य दक्षिणहस्तेन खड्गस्य अग्रभागम् अङ्गरक्षकस्य कण्ठस्य समीपं नीत्वा अवदत् - ''अये ! भवान् खड्गम् आकृष्य तिष्ठति चेदपि न कापि भीतिः अस्माकम् । भवतः अग्रे यः गच्छन् आसीत् सः वृक्षशाखायां लम्बमानः अस्ति, पश्यतु । किं भवन्तम् अनुसृत्य अन्ये अपि केचन आगच्छन्तः सन्ति ?'' इति ।

एतस्य किम् उत्तरं दातव्यम् इति चिन्तयन् आसीत् अङ्गरक्षकः - 'अन्ये केचन अनुचराः आगच्छन्तः सन्ति इति कथनात् किम् अपायः अपगच्छेत् ? अथवा आवां कौ इति कथनात्



रज्ज्वाः ग्रन्थिं शिथिलीकृतवान् । तदा नागमल्लसमीपे स्थितः लुण्ठाकः दुर्मुखसमीपं गत्वा उपहासपूर्वकम् अवदत् - ''किं भवता कटौ बद्धा रज्जुः कण्ठे योज्यते ?'' इति ।

अत्रान्तरे वृक्षस्थः लुण्ठाकः नागमल्लः चापि दुर्मुखसमीपम् आगतवन्तौ । नागमल्लः राजानं सकृत् तीक्ष्णदृष्ट्या दृष्ट्वा अवदत् - ''भवतः वेषभूषादीनां दर्शनात् भासते यद् भवान् कश्चन महाधनिकः इति । स्वसमीपे यावत् धनम् अस्ति तावत् विना विरोधं अर्पयतु अस्मभ्यम् । अङ्गरक्षकं च इदानीम् एव गृहं प्रति प्रेषयित्वा दशसहस्रं सुवर्ण-नाणकानि आनाययतु च । अन्यथा भवतः शवः वन्यपशूनाम् आहारः भविष्यति निश्चयेन'' इति ।

एतानि वचनानि श्रुत्वा राजा दुर्मुखः अचिन्तयत् - 'यदि अहं मम राजत्वं, देशं च वदेयं तर्हि एषः पुरस्कारप्राप्तीच्छया मदीयं शिरः कर्तयित्वा जितकेतुराजाय दातुं प्रयासं कुर्यात् । यदि आत्मानं कश्चित् वणिजं वदेयं तर्हि दशसहस्रं सुवर्णमुद्राः अङ्गरक्षकद्वारा आनायनीयानि भवेयुः । अत्रान्तरे मया उक्तम् असत्यम् इति यदि एषः जानीयात् तर्हि अपायः निश्चितः ।....' इति ।

एतदभ्यन्तरे लुण्ठाकनायकः क्रोधेन खड्गं चालयन् अपृच्छत् - ''किं चिन्त्यते भवता ? इतः पलायनाय किम् उपायः चिन्त्यमानः अस्ति ?'' इति ।

तदा दुर्मुखः अवदत् - ''दशसहस्रस्य सुवर्णमुद्राणाम् आनयनं कथम् इति चिन्ता मम । मम नाम दुर्जयगुप्तः इति । अहम्

एव एते तूर्ष्णीं भवेयुः ?' इति ।

तदा शाखायां लम्बमानः दुर्मुखः उच्च-स्वरेण अवदत् - ''अये अङ्गरक्षक ! क्व गतः भवान् ?'' इति ।

तदा नागमल्लः खड्गं चालयन् कठोरस्वरेण - ''अये, भवान् किम् अङ्गरक्षकः ? भवतः राजा क्व ? आदौ भवान् अश्वात् अवतरतु तावत्'' इति आज्ञापयत् ।

अङ्गरक्षकः अश्वात् अवतीर्णः । दुर्मुख-राजस्य कटौ बद्धायाः रज्ज्वाः निग्रहणे प्रयतमानं नागमल्लः अवदत् - ''महाधनिकः अस्माभिः गृहीतः अस्ति । तस्य पञ्च अपि अङ्गुलयः अङ्गुलीयकैः भूषिताः सन्ति । तं जागरूकतया अवतारयतु । तस्य कोऽपि अपायः मा भवतु'' इति ।

वृक्षस्थः लुण्ठाकः जागरूकतया दुर्मुखं भूमौ अवतारितवान् । दुर्मुखः कटौ बद्धायाः

उदयगिरिनिवासी अस्मि । एतदवसरे मम समीपे एका वराटिका अपि नास्ति'' इति ।

एतत् श्रुत्वा नागमल्लः आश्चर्येण अवदत् – ''अमूल्यानि वेषभूषणानि धृतवान्, अङ्गरक्षकेण समेतः भवान् एतस्मिन् अरण्यप्रदेशे विना धनं किं सञ्चरति ? किं भवतः एतत् वचनं विश्वासार्हम् अस्ति ?'' इति ।

ततः सः स्वस्य अनुचरौ पश्यन् अवदत् – ''एतस्य कटौ स्थिता रज्जुः कण्ठे योज्यताम् । कस्यां शाखायाम् एतस्य उद्बन्धनं करणीयम् इति अहं परिशीलयिष्यामि'' इति ।



यावत् नागमल्लस्य कथनं समाप्तं तावता अनतिदूरात् गजस्य भल्लूकस्य च गर्जनध्वनिः श्रुतः । एतं श्रुत्वा राजा दुर्मुखः तदङ्गरक्षकः च कम्पितौ जातौ । अङ्गरक्षकः परितः दृष्टिं प्रसारयन् अवदत् – ''महाराज ! मया चिन्तितम् आसीत् यत् वधकः भल्लूकः अरण्ये कुत्रापि अन्येन मार्गेण गतः स्यात् इति । किन्तु इदानीं स्पष्टं यत् आवाम् अनुसरन् एव आगतः अस्ति सः इति । महत् कष्टम् उपस्थितम् इदानीम्'' इति ।

नागमल्लः आश्चर्यचकितः जातः । सः महता आश्चर्येण स्वस्य अनुचरौ पश्यन् अवदत् – ''भवन्तौ एतस्य वचनं श्रुतवन्तौ खलु ? एकः स्वस्य नाम वदति – दुर्जयगुप्तः इति । अपरः तं 'महाराज !' इति सम्बोधयति । वधकः भल्लूकः इतः एव आगच्छन् अस्ति इति कथनं तु महते आश्चर्याय'' इति ।

ततः सः दुर्मुखाङ्गरक्षकौ उद्दिश्य – ''भोः, सत्यम् उच्यताम् । भ्रमजनकैः वचनैः भवन्तौ अस्मान् वञ्चयितुं न अर्हतः'' इति अवदत् ।

तदा राजा दुर्मुखः भीतः । एतदवसरे किम् उत्तरं वक्तव्यम् इति न ज्ञातं तेन । यावत् सः चिन्तयन् आसीत् तावता अतिनिकटात् एव गजभल्लूकयोः घीङ्कारः श्रुतः । एतत् श्रुत्वा नागमल्लः अपि भीतः ।

सः अनुचरौ अवदत् – ''भवतोः अन्यतरः वृक्षम् आरुह्य परिशीलयतु । गजस्य घीङ्कारः स्पष्टः । किन्तु भल्लूकध्वनिः मानवस्वरेण कथम् इति तु ज्ञायते'' इति ।

लुण्ठाकयोः अन्यतरः झटिति वृक्षम् आरोहत् । सः परितः परिशील्य उच्चस्वरेण अवदत् – ''आर्य ! दुर्जयगुप्तस्य तदनुचरस्य च कथनम् अवितथम् एव । कर्तितशुण्डः कश्चन गजः ! तदुपरि परशुहस्तः भल्लूकः !! स च भल्लूकः वृक्षशाखाः कर्तयन् इतः एव



आगच्छति'' इति ।

इदानीं किं करणीयम् इति नागमल्लः यावत् चिन्तयन् आसीत् तावता दुर्मुखः तस्य हस्तौ गृहीत्वा अवदत् - ''भोः, अचिरात् एव इतः पलायनं वरं मन्ये अहम् । धनलोभेन अस्माकं प्राणान् अपायगर्ते मा पातयतु कृपया । यदि भवान् इच्छेत् तर्हि एकं राज्यम् अपि क्रीत्वा दद्यां भवते'' इति ।

अङ्गरक्षकः अश्वम् आरुह्य ततः निर्गन्तुम् इच्छन् नागमल्लम् अवदत् - ''यदि भवान् अस्मन्महाराजस्य प्राणान् रक्षेत् तर्हि अर्ध-राज्यम् अपि भवते दद्यात् सः । अहं शीघ्रमेव राजधानीं गत्वा सेनाम् आनेष्यामि'' इति ।

''तत् यदि शक्यं स्यात् तर्हि अहम् एव तत् कुर्याम् । एतस्मिन् घोरे अरण्ये राजधानीं प्रति गमनाय मार्गः कथं वा ज्ञायेत ?'' इति वदन् दुर्मुखः अङ्गरक्षकस्य अश्वस्य खलीनं गृहीत्वा आकृष्टवान् ।

नागमल्लः स्वस्य अनुचरौ सङ्केतमिश्रितया दृष्ट्या अपश्यत् । तदा कश्चन लुण्ठाकः दुर्मुखं तदङ्गरक्षकं च क्रोधमिश्रितया दृष्ट्या पश्यन् अवदत् - ''किं भवन्तौ महामूर्खौ, उत वञ्चनानिपुणौ ? वधकः भल्लूकः अत्र आक्रमणाय उपस्थितः अस्ति । भवन्तौ तु राजधानीं प्रति गमनस्य चिन्तनं कुर्वन्तौ स्तः । धिक् भवन्तौ'' इति ।

नागमल्लः अनुचरौ पश्यन् अवदत् - ''एतौ रज्ज्वा बद्ध्वा अस्मद्गुहां प्रति नयताम् । वधकभल्लूकस्य निर्गमनस्य अनन्तरम् एतयोः विचारणां करिष्यामः'' इति ।

एवम् अनुचरौ आदिश्य नागमल्लः गुहां प्रति प्रस्थितवान् । तदीयौ अनुचरौ दुर्मुखं तदनुचरं च रज्ज्वा बद्ध्वा आकृष्य गुहां नीतवन्तौ ।

वधकः भल्लूकः दूरात् एव दुर्मुखं दृष्ट्वा - ''अये दुष्ट ! भवान् मम हस्तगतः इदानीम् । अहं मम परशुना भवन्तं बलिं करिष्यामि'' इति उच्चैः वदन् वेगेन दुर्मुखसमीपं गन्तुम् उद्युक्तः ।

नागमल्लः तदनुचरौ च दुर्मुख-तदङ्ग-रक्षकाभ्यां सह गुहां प्रविष्टवन्तः, महत्या कयाचित् शिलया गुहायाः द्वारं पिहितवन्तः च ।

वधकः भल्लूकः गुहायाः पुरतः स्थित्वा शिलाताडनेन द्वित्रवारं शब्दं कृत्वा उच्चस्वरेण अवदत् - ''अये गुहावासिनः ! अहं दुर्मुख-मात्रं संहर्तुम् इच्छामि । मत्तः अन्यस्य कस्यापि हानिः न भविष्यति । गुहायाः द्वारम्

उद्घाटयन्तु तावत्'' इति ।

एतत् श्रुत्वा नागमल्लः अवदत् - ''एषः पिशाचः भल्लूकः राज्ञः दुर्मुखस्य प्राणान् अपहर्तुम् इच्छति । सः किमर्थम् अत्र आगतः ? सर्वम् अस्पष्टं खलु ?'' इति ।

ततः सः दुर्मुखम् अवदत् - ''इतः समीपे स्थितम् उदयगिरिराज्यं दुर्मुखः नाम राजा पालयति । अहं तु अरण्यवासी । कदापि नगरं न गतं मया । सः राजा अद्यावधि न दृष्टः अपि । भवान् एव सः दुर्मुखः न स्यात् खलु ?'' इति ।

''अहं दुर्जयगुप्तः अस्मि । उदयगिरिवासी च अस्मि । पिशाचग्रस्तस्य तस्य दुष्टस्य भल्लूकस्य वचने किमर्थं विश्वासः भवतः ? इतः आवयोः निर्गमनाय कमपि उपायं चिन्तयतु कृपया । अहं भवते दशसहस्रं सुवर्णनाणकानि दास्यामि'' इति दैन्येन प्रार्थितवान् दुर्मुखः ।

''अस्माकं महाराजेन अद्यावधि वचन-भङ्गः न कृतः एव'' इति अवदत् अङ्ग-रक्षकः ।

''अये मूर्ख ! अलं व्यर्थप्रलापेन ! किं कोऽपि पिशाचः भवति आविष्टः अस्ति ? अरण्यप्रवेशतः आरभ्य भवान् मां पौनःपुन्येन 'महाराज !' इति सम्बोधयन् अस्ति । सर्वेषां पुरतः अहं भवतः शिरश्छेदं कर्तुम् अर्हामि । स्मरतु एतत्'' इति अतर्जयत् दुर्मुखः ।

एतत् श्रुत्वा नागमल्लः स्वस्य अनुचरौ अवदत् - ''महतः सन्तोषस्य विषयः यत् सौभाग्येन दौर्भाग्येण वा अस्माभिः उदयगिरेः राजा एव गृहीतः अस्ति । सर्वेषां पुरतः



शिरश्छेदं कर्तुं कस्य वा अधिकारः अस्ति, ऋते राज्ञः ? एषः दुर्जयगुप्तः इति आत्मानं निर्दिशन् राजा प्रमादवशात् स्वस्य परिचयं स्वयम् एव उक्तवान् अस्ति'' इति ।

इदानीं राजा उभयविधेन सङ्कटेन ग्रस्तः अस्ति । गुहातः बहिः वधकः भल्लूकः वधाय प्रतीक्षते । अन्तः च नागमल्लः पीडनं चिन्तयति ।

किञ्चित् विचिन्त्य सः नागमल्लम् अवदत् - ''भोः ! भवान् कमपि भ्रमं प्राप्तवान् अस्ति इति भाति । अहं तु दुर्जयगुप्तः एव । एतस्य घोरारण्यस्य प्रवेशस्य अनन्तरम् एषः मम सेवकः विलक्षणं व्यवहारं कुर्वन् अस्ति । न जाने, एतस्य किं कारणम् इति । एतस्य वचने न विश्वसितु कृपया'' इति ।

''महाराज ! क्षन्तव्यः अहम् । अज्ञानेन कृतः मम अपराधः क्षन्तव्यः'' इति प्रार्थित-

वान् अङ्गरक्षकः ।

नागमल्लः दुर्मुखम् अवदत् - ''भवान् दुर्मुखः भवतु, दुर्जयगुप्तः वा, किन्तु तेन अस्माकं न कोऽपि लाभः । इदानीम् अस्माभिः आत्मरक्षणं चिन्तनीयम् । सः भयङ्करः भल्लूकः गुहातः बहिः परशुं गृहीत्वा द्वारस्थशिलायाः अपसारणाय प्रयतमानः अस्ति'' इति ।

ततः सः अनुचरान् पश्यन् अवदत् - ''यदि मरणं निश्चितम् एव तर्हि गुहायाः अन्तः स्थितानाम् अपि अस्माकं मरणं भवेत् एव । किं मरणभीत्या ? वयमेव द्वारशिलाम् अपसार्य कुतो वा प्रथमाक्रमणं न कुर्याम ?'' इति ।

यावत् अनुचरौ किमपि वक्तुम् उद्युक्तौ तावता अङ्गरक्षकः अवदत् - ''एषः भल्लूकः भल्लूकमान्त्रिकस्य सृष्टिः । तस्य शक्तिः राक्षसशक्तिसदृशी । अतः गुहायाः अन्तः एव अस्माकं स्थितिः वरम् इदानीम्'' इति ।

अत्रान्तरे वधकभल्लूकः स्वस्य हस्ताभ्यां प्रयत्नेन द्वारशिलां किञ्चित् अपनीय गुहायाः अन्तः दृष्टिं प्रसारयन् अवदत् - ''अये दुर्मुखराज ! बहिः आगच्छतु तावत् । भवतः शिरः कर्तयित्वा एव अहम् इतः प्रतिगमिष्यामि'' इति ।

''अहो, इदानीं मया ज्ञातम् - एषः भल्लूकः दुर्मुखराजं दुर्जयापरनामधेयं वा संहर्तुम् इच्छति, न अन्यम् इति । दैवात् वयं रक्षिताः । भवन्तौ एतं गुहातः बहिः प्रेषयन्तु'' इति आदिष्टवान् नागमल्लः ।

उभौ तदनुचरौ दुर्मुखं गृहीत्वा गुहातः बहिः प्रेषयितुं प्रयासम् आरब्धवन्तौ । तदभ्यन्तरे कश्चन कर्णकठोरः ध्वनिः अनतिदूरात् श्रुतः - ''मया आ बहोः कालात् एषः कोलाहलः श्रूयमाणः अस्ति । अहम् उग्रदण्डः नाम राक्षसः अत्र गुहायां वसामि इति किं भवद्भिः न ज्ञायते ? शान्तिभङ्गम् अहं सर्वथा न सहे'' इति ।

एतत् श्रुत्वा वधकः भल्लूकः राक्षसं पश्यन् गर्जितवान् - ''अये, भवान् राक्षसः ? भवतः नाम उग्रदण्डः इति ? भल्लूकमान्त्रिकेण अभिमन्त्र्य दत्तः मम एषः परशुः भवतः शिरः कर्तयिष्यति'' इति ।

- *(अनुवर्तते)*



# वेताल-कथा

## स्वार्थसंवलितः परोपकारः

स्वीकृतस्य कार्यस्य परित्यागः अपमानाय इति चिन्तयन् इव त्रिविक्रमः पुनरपि वृक्षस्थं शवं स्कन्धे आरोप्य मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! पुनः पुनः एतस्मिन् घोरे श्मशानमार्गे अटता भवता स्वस्य असफलतायाः कारणं किम् अवगतम् ? बुद्धिमान् विवेकी सन् अपि भवान् किमर्थम् एतत् अवगन्तुं न शक्तवान् ? भवतः प्रयत्नः प्रशंसार्हः । किन्तु भवदीया मूर्खता तु अनुकम्पार्हा । भवतः एषः प्रयासः किं परोपकाराय, उत स्वार्थाय ? स्वार्थ-परोपकारयोः भेदः अति-सूक्ष्मः । क्वचित् तयोः भेदः न अवगम्यते एव । कमलस्य



जीवने एतत् एव प्रवृत्तम् । किं तस्य जीवनस्य अवगमने भवतः महदस्ति कुतूहलम् ? भवतः मार्गायासस्य परिहाराय तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

कोदण्डपुरनामके कस्मिंश्चित् महाग्रामे पुरुषोत्तमो नाम कश्चन गृहस्थः निवसति स्म । तस्य उभौ पुत्रौ । ज्येष्ठः शेखरः पिता इव एव परोपकारी । ग्रामजनाः सर्वे तं प्रशंसन्ति स्म ।

पुरुषोत्तमस्य द्वितीयः पुत्रः कमलः स्वार्थी । सर्वदा स्वस्य लाभं चिन्तयति स्म सः । परोपकारे कदापि न प्रवर्तते स्म । पुरुषोत्तमः स्वस्य द्वितीयं पुत्रम् अपि परोपकारिणं कर्तुं बहुधा प्रयासं कृतवान् । तथापि साफल्यं न प्राप्तं तेन । सः मरणात् पूर्वं कमलम् आहूय अवदत् - ''वत्स ! अहं भवते सम्पत्तेः कमपि भागं दातुम् असमर्थः अस्मि । भवान् सुखजीवनम् इच्छति इति अहं जानामि । समीपस्थे अरण्ये स्थिते पर्वते 'पातालगुहा' नाम काचित् गुहा अस्ति। तस्याम् आनन्दः नाम संन्यासी निवसति । भवान् तं पश्यतु । तस्मात् भवतः हितं सेत्स्यति'' इति ।

'ज्येष्ठाय पुत्राय शेखराय समग्रां सम्पत्तिं दातुम् इच्छन् मम पिता सम्पत्तिहीनताकथां रचितवान् अस्ति' इति चिन्तितवान् आसीत् कमलः । किन्तु पितुः मरणस्य अनन्तरं तेन ज्ञातं यत् परोपकारशीलता एव पितुः सम्पत्तिः आसीत् इति ।

इदानीं जीवनयापनसमस्या तस्य पुरतः उपस्थिता । तदा शेखरः अवदत् - ''भवान् मया सहैव निवसतु । अहं भवतः पालन-पोषणादिकं करिष्यामि'' इति ।

'अग्रजः मम पोषणदायित्वं स्वीकरोति चेत् तु वरम् एव' इति चिन्तयित्वा कमलः अग्रजेन सह स्थितिम् अङ्गीकृतवान् । किन्तु अल्पे एव काले ग्रामीणाः अनुजं पोषयतः शेखरस्य प्रशंसां, कमलस्य निन्दनं च आरब्धवन्तः । तस्मात् खिन्नः कमलः अग्रजम् अवदत् - ''भवतः कथनस्य अनुगुणम् एव मया अत्र वासः आरब्धः । किन्तु भवता ख्यातिः प्राप्ता, मया तु अपख्यातिः आसादिता'' इति ।

तदा शेखरः हसन् अवदत् - ''भवान् कस्यापि उपकारं न करोति । यदि प्रशंसा

प्राप्तव्या तर्हि भवता अपि परोपकारः करणीयः'' इति ।

''यतः एका वराटिका अपि न प्राप्यते तस्मात् परोपकारात् किं प्रयोजनं मम ? अहं तु अपारां सम्पत्तिम् इच्छामि । तदर्थं कोऽपि मार्गः ज्ञायते चेत् वदतु'' इति अवदत् कमलः ।

''सम्पत्तिः एव आवश्यकी चेत् कृषौ, वाणिज्ये, ललितकलासु वा प्रावीण्यं सम्पादनीयम् । अहम् अपि एतद्विषये निपुणः न । अतः भवान् एव कमपि उपायं चिन्तयतु एतदर्थम्'' इति अवदत् शेखरः ।

धनं सम्पादनीयम् एव इति इच्छा तु तीव्रा अस्ति कमलस्य । अन्ते, पितुः वचनं स्मरन् सः पातालगुहावासिनः आनन्दस्य समीपं गत्वा तं प्रणम्य अवदत् - ''भवान् द्रष्टव्यः इति मम पिता सूचितवान् आसीत् । आनन्दनामकः भवान् एव इति अहं भावयामि'' इति ।

कमलस्य मुखात् सर्वं विवरणं श्रुत्वा अवदत् आनन्दः - ''भवतः पित्रा सूचितः आनन्दः अहमेव । सम्पत्तेः सम्पादनाय मार्गं दर्शयितुम् अहं शक्नोमि । किन्तु एतस्मात् भवता मया च किञ्चित् कष्टम् अनुभोक्तव्यं भविष्यति'' इति ।

ततः सः स्वस्य विवरणम् उक्तवान् - ''भवतः पिता पुरुषोत्तमः अहं च प्रतिवेशिनौ । पुरुषोत्तमः परोपकारशीलः । स्वार्थः तस्मिन् सर्वथा न आसीत् । मयि तु स्वार्थसाधकता अधिकतया आसीत् ।

कदाचित् आवां समीपस्थं कञ्चित् ग्रामं



गच्छन्तौ आस्व । मध्येमार्गम् आवाभ्यां कश्चन संन्यासी दृष्टः । सः मार्गस्य पार्श्वे पतितः आसीत् । तस्य पादे कश्चन व्रणः अपि आसीत् । पुरुषोत्तमः तस्य साहाय्यं कर्तुम् ऐच्छत् । किन्तु मया तस्य निषेधः कृतः । मम निराकृतिम् उपेक्ष्य सः समीपस्थेभ्यः गुल्मेभ्यः कानिचन पर्णानि उत्पाट्य निष्पीड्य प्राप्तेन रसेन तस्य संन्यासिनः व्रणस्य चिकित्सां कृतवान् ।

ततः संन्यासी मन्दम् उत्थाय पुरुषोत्तमं प्रशंसापूर्वकं पश्यन् अवदत् - ''वत्स ! मम समीपे महिमोपेतं तायकम् अस्ति । तत् यस्य समीपे भवति सः यत् इच्छति तत् प्राप्स्यति । अहं तु संन्यासी । एतादृशेन तायकेन किं मम ? योग्याय जनाय अहम् एतत् दातुम् इच्छामि । अतः एव सर्पेण




दृष्टः इव अभिनयं कृतवान् अहम् । एतत् तायकं स्वीकृत्य सुखमयं जीवनं यापयतु भवान्'' इति ।

तदा पुरुषोत्तमः करौ योजयित्वा अवदत् – ''श्रीमन् ! अहं संन्यासी तु नास्मि । तथापि एतस्य तायकस्य आवश्यकता नास्ति मम जीवने । यावत् आवश्यकं ततोऽपि अधिकं धनम् अस्ति चेत् दुःखम् एव प्राप्यते । अतः एतत् अन्यस्मै कस्मैचित् दातुम् अर्हति भवान्'' इति ।

संन्यासी निराकारणपूर्वकं शिरः चालयन् – ''एतस्मात् क्षणात् एतत् तायकं भवदीयम् एव । योग्यं जनम् अन्विष्य दानं करोतु भवान् एव, यदि एतत् आत्मनः निमित्तं न इष्यते । अयोग्याय दत्तं चेत् तत् अनर्थकरं भवेत्'' इति अवदत् ।

पार्श्वे एव स्थितः अहं चिन्तयामि स्म यत् एतत् तायकं मया यदि प्राप्येत तर्हि वरं स्यात् इति । अतः अहम् अपृच्छम् – ''सः अनर्थः कः ? अयोग्यः कीदृशः ?'' इति ।

तदा संन्यासी मन्दहासपूर्वकम् अवदत् – ''कोऽपि जनः वर्षादधिककालम् एतत् स्वसमीपे रक्षितुं न अर्हति । अयोग्येन प्राप्तं तत् वर्षाभ्यन्तरे तत्समीपं प्रत्यागमिष्यति । एवं प्रत्यागमनात् तस्य तेजः क्षीयते । गच्छता कालेन सः संन्यासी भविष्यति । किन्तु तेन मोक्षः तु न प्राप्यते'' इति ।

संन्यासिनः वचनं श्रुत्वा पुरुषोत्तमः माम् उद्दिश्य – ''एतत् तायकं भवान् स्वीकर्तुम् इच्छति इति भाति । एतत् भवते सहर्षं दातुं सिद्धः अस्मि अहम् । भवान् अयोग्यः न इत्यत्र पूर्णः विश्वासः अस्ति मम'' इति उक्त्वा तत् तायकं मह्यं दत्तवान् ।

तायकस्य प्राप्तेः अनन्तरम् अहं यत् इच्छामि तत् प्राप्नोमि स्म । किन्तु एतस्मात् यः आनन्दः प्राप्यते तं संविभज्य भोक्तुम् अहं सिद्धः न आसम् । अतः जनाः माम् ईर्ष्यावन्तं वदन्ति स्म । वर्षसमाप्तितः पूर्वम् एव अहं तत् तायकं कस्मैचित् दत्तवान् । किन्तु वर्षाभ्यन्तरे तत् पुनरपि मत्समीपम् आगच्छत् । एवं चतुर्वारं प्रवृत्तम् । अहं विरक्तः अभवम् । मम स्वास्थ्यम् अपि क्षीणं जातम् । प्रकाशदर्शनात् अपि अहं भीतः भवामि स्म । अतः अहं संन्यासी सन् एतां पातालगुहाम् आश्रितवान् ।

मम एताम् अवस्थां दृष्ट्वा पुरुषोत्तमः नितरां खिन्नः । 'एतस्य मूलकारणम् अहम् एव' इति चिन्तयति स्म सः । त्रिचतुरवारं

एतां पातालगुहाम् आगत्य सः माम् अवदत् - ''तत् तायकं भवतः एतादृशीं गतिं कल्पयेत् इति मया स्वप्ने अपि न चिन्तितम् आसीत् । यावत् भवता मोक्षः न प्राप्यते तावत् मया अपि मोक्षः न प्राप्यते । अतः एतस्य तायकस्य बन्धनात् भवान् मुक्तः यथा भवेत् तथा अहं प्रयासं करिष्यामि'' इति । एतदनन्तरम् अल्पे एव काले सः परलोकं श्रितवान् ।

''वत्स ! कमल ! यावत् मया मुक्तिः न प्राप्यते तावत् भवतः पित्रा अपि मुक्तिः न प्राप्यते । एतस्य एतत् तात्पर्यं सिद्धं यत् भवतः पितुः आत्मा अद्यापि भूलोके एव परिभ्रमणं करोति इति । स्वस्य मम च मुक्तये भवतः पिता भवन्तम् अत्र प्रेषितवान्, किन्तु तायकस्य रहस्यं तु भवन्तं न उक्तवान् । स्वार्थसम्पादनाय अहम् एतत् तायकं भवते दातुं नार्हामि । अतः मया सर्वम् अपि विस्तरेण उक्तम् । वर्षात् अधिककालम् एतत् अहं मत्समीपे स्थापयितुम् अपि न शक्नोमि । अतः भवते इदानीम् एतत् ददामि । वर्षाभ्यन्तरे भवान् पुनः आनीय मह्यं ददातु । भवतः क्लेशः कथमपि न भवेत् इति मम अपेक्षा'' इति अवदत् आनन्दः ।

तदा कमलः विनयेन अवदत् - ''मम पिता परोपकारी आसीत् । अहं स्वार्थी अस्मि इति सः जानाति स्म । मम स्वार्थः परोपकारमिश्रितः भवतु इति तस्य इच्छा आसीत् । एतत् तस्य श्रेष्ठतां द्योतयति । मम पितुः आत्मनः भवतः च मुक्तये मम



स्वार्थः कारणं भवितुम् अर्हति इत्यस्ति चेत् तत् महते सन्तोषाय एव । एतत् तायकं भवान् मह्यं ददातु । तत् शाश्वततया मत्समीपे यथा तिष्ठेत् तथा अहं विशेषप्रयत्नं करिष्यामि'' इति ।

आनन्दः आशीर्वादपुरस्सरं तत् तायकं कमलाय दत्तवान् । तायकस्य प्राप्तेः अनन्तरं कमलेन कृतं सर्वं सफलं जातम् । तस्य व्यवहारशैली अपि परिवृत्ता । तायकस्य कारणतः या सम्पत्तिः प्राप्ता तस्याः उपयोगः तेन स्वीकृतः, कष्टस्थितौ स्थितानां साहाय्यम् अपि कृतम् ।

एवम् एव वर्षम् अतीतम् । तदभ्यन्तरे कमलेन प्रभूता सम्पत्तिः सम्पादिता । सङ्क्रान्तिदिने प्रातः आनन्दः गुहातः निर्गत्य कमलसमीपं गत्वा अवदत् - ''कमल ! तत् तायकं सकृत् मह्यं ददातु'' इति ।

कमलः तायकम् आनन्दाय दत्तवान् । आनन्दः तत् इतस्ततः परिशील्य कमलम् उद्दिश्य - ''एकं प्रमुखं वचनं भवन्तं वक्तुम् अहम् अत्र आगतः । भवत्कारणतः भवतः पित्रा मुक्तिः प्राप्ता अस्ति । मया अपि मुक्तिः प्राप्स्यते । भवतः जीवने इतःपरम् एतस्य तायकस्य आवश्यकता न भविष्यति । यदि एतत् अयोग्यस्य हस्तं गच्छेत् तर्हि अनर्थचक्रस्य पुनरावर्तनस्य आरम्भः भवेत्'' इति उक्त्वा तत् तायकम् अग्नौ अक्षिपत्, ततः निर्गतवान् च ।

वेतालः एवं कथां समाप्य अवदत् - 'अये राजन् ! कमलस्य स्वार्थः एव परोपकारस्य कारणं जातः । एवं तर्हि स्वार्थः अपि किं प्रशस्तः ? आनन्दस्य आशीर्वादस्य कारणतः तायकस्य दुष्टः प्रभावः दूरं गतः । आनन्दः इतः पूर्वम् एव स्वस्य आशीर्वादेन तायकस्य दुष्टप्रभावं दूरीकर्तुं किमर्थं प्रयासं न कृतवान् ? कमले यत् परिवर्तनम् आगतं तस्य कारणं किम् ? किं कमलः तायकं स्वीकर्तुं योग्यः आसीत् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''स्वार्थः कदापि प्रशंसनीयः न । तथापि यः स्वार्थः स्वलाभमात्राय भवति, अन्यस्य हानये न भवति सः निन्द्यः तु न । कमलः स्वार्थी अस्ति, न तु दुष्टः । यत् कार्यं कृतं तस्य प्रतिफलम् इच्छति स्म सः । आनन्दस्य आशीर्वादस्य कारणतः तायकस्थः दुष्टः प्रभावः अपगतः इति न । कमलस्य सज्जनतायाः कारणतः परिवर्तनं जातम् । तस्मात् तायकस्य दुष्टः प्रभावः अपगतः । कमलः सज्जनः भूत्वा एतत् साधितवान् । तस्मिन् एव काले तायकबलात् सम्पत्तिम् अपि सम्पाद्य सः स्वजीवनस्तरं वर्धितवान् । कष्टस्थितौ स्थितानाम् उपकारं कुर्वन् उत्तमां ख्यातिम् अपि सम्पादितवान् सः । अतः कमलः तायकस्य स्वीकाराय अर्हः आसीत् इत्यत्र नास्ति एव सन्देहः'' इति ।

एवं राज्ञः मौनस्य भङ्गं कर्तुं समर्थः वेतालः शवसहिततया ततः अदृश्यः भूत्वा वृक्षस्य शाखां पुनरपि अवलम्बितवान् ।






## पारावतद्वारा सन्देशप्रेषणम्



सन्देशाः कथं प्रेष्यन्ते ? पत्रालयद्वारा, दूरवाण्या, फेक्स्-ईमेल्-टेलिग्राफ्-वैस्मेल्प्रभृतीनाम् आधुनिक-तन्त्रज्ञानानां द्वारा वा प्रेष्यन्ते इति वदेयुः भवन्तः । पारावतद्वारा अपि सन्देशाः प्रेष्यन्ते, तदपि आधुनिके एतस्मिन् काले इति किं भवन्तः जानन्ति ? ओरिस्सराज्यस्य कटकप्रदेशे स्थितः आरक्षकालयः शतशः पारावतान् प्रशिक्ष्य संरक्षितवान् अस्ति । पर्वतमयान् आरक्षकालयान् प्रति सन्देशप्रेषणाय एतेषाम् उपयोगः क्रियते तत्रत्यैः । निर्दिष्टं स्थलं गत्वा सन्देशं दत्त्वा प्रतिसन्देशं प्राप्य तस्मिन् एव दिने प्रत्यागम्यते तैः ।

## अपूर्व शिवमन्दिरम्



सर्वेषु शिवदेवालयेषु प्रायः लिङ्गाकारकः एव शिवः पूज्यते । हिमालये अमरनाथप्रदेशे तु हिममयं शिवलिङ्गं पूज्यते । निसर्गेण निर्मीयते एतत् लिङ्गम् । वर्षस्य केषुचित् मासेषु एतस्य दर्शनाय समग्रात् देशतः भक्ताः आगच्छन्ति । ग्रीष्मकाले हिमस्य द्रवीभवनात् एतस्य लिङ्गस्य आकारः क्षीणः भवति । यत्र लिङ्गं न पूज्यते, अपि तु नृत्यलोलः नटराजमूर्तिः पूज्यते तादृशः अद्वितीयः देवालयः तमिळुनाडुराज्ये 'चिदम्बर'प्रदेशे अस्ति । भरतमुनिना नाट्यशास्त्रे उक्ताः अष्टोत्तरशतं भङ्गयः एतस्मिन् देवालये द्रष्टुं शक्याः ।

भारतकथावली - २६

# लालश्रेष्ठिना प्रार्थितः वरः

पूर्वं वाराणसीनगरे लालश्रेष्ठी नाम कश्चन धनिकः निवसति स्म । एका वराटिका अपि न कस्मैचित् दीयते स्म तेन ।

तस्य पत्न्याः नाम मञ्जूबायी इति । तीर्थयात्रा करणीया इति कदाचित् तस्याः मनसि इच्छा उत्पन्ना । सा स्वस्य इच्छां पतिम् उक्तवती । तत् श्रुत्वा लालश्रेष्ठी कोपेन अवदत् - "अहो ! कीदृशी मूर्खता भवत्याः ! किं भवती शिवस्य अपमाननं कर्तुम् इच्छति ? शिवः एतस्याः वाराणस्याः अधिदेवता । तस्य दर्शनाय सहस्रशः जनाः प्रतिदिनं दूरदेशेभ्यः आगच्छन्ति । एवं स्थिते अत्रत्याः वयं यदि अन्यत्र गच्छेम तर्हि किं शिवस्य कोपः न भवेत् ?" इति ।

'एषः धनं व्ययीकर्तुम् अनिच्छन् एवं वदन् अस्ति' इति जानती मञ्जूबायी मौनम् आश्रितवती ।

शिवरात्रिः आगता । तद्दिने गङ्गानद्यां स्नानं पुण्यप्रदम् इति जनानां विश्वासः । अतः मञ्जूबायी पतिम् उक्तवती - "आवां गङ्गानद्यां स्नानं कृत्वा आगच्छाव" इति ।

"अये मूर्खे ! अद्य स्नानघट्टे अर्चकानां महापीडा भविष्यति इति किं भवत्या न ज्ञायते ? पूजां कारयामः इति वदन्तः ते अस्मत्तः प्रभूतं धनं स्वीकुर्वन्ति । अतः अद्य तत्र न गन्तव्यम्" इति अवदत् लालश्रेष्ठी ।

किन्तु मञ्जूबायी स्वस्य अपेक्षां त्यक्तुं न सिद्धा । अन्ते, यत्र कोऽपि अर्चकः आगत्य न पीडयेत् तादृशे एकान्तस्थले स्नानं करणीयम् इति नियमं विधाय लालश्रेष्ठी पत्न्या सह स्नानार्थं प्रस्थितः । जनरहितस्य स्थलस्य अन्वेषणाय ताभ्यां यत्नः आरब्धः ।



भगवान् शिवः, देवी पार्वती च अदृश्यरूपेण सञ्चरन्तौ भक्तानां व्यवहारं परिशीलयन्तौ आस्ताम् । तदवसरे पार्वती शिवं पृष्टवती – "एतावन्तः भक्ताः भवति भक्तिं वहन्ति । किमर्थं भवता एतेषाम् इच्छा न पूर्यते ?" इति ।

"एते तीव्रेच्छावन्तः न । एते सम्प्रदायमात्रस्य अनुसर्तारः" इति अवदत् शिवः ।

एतदवसरे एव लालश्रेष्ठि-तत्पत्न्योः उपरि पार्वत्याः दृष्टिः पतिता । "तत्र पश्यतु । यत्र भवतः ध्यानस्य भङ्गः न भवेत् तादृशं प्रशस्तं स्थलम् अन्विष्यन्तौ स्तः तौ । किम् एतौ अपि अन्ये इव एव इति चिन्तयति भवान् ?" इति अपृच्छत् पार्वती ।

शिवस्य मन्दहासः एव उत्तरम् आसीत् । ततः तौ अर्चकवेषं धृत्वा लालश्रेष्ठिसमीपं गतवन्तौ । अर्चकं दृष्ट्वा लालश्रेष्ठी क्रोधेन अवदत् – "अहं भवतः साहाय्यं न इच्छामि । मम निमित्तं कोऽपि मन्त्रः भवता उच्चारणीयः नास्ति । इतः गन्तुम् अर्हति भवान्" इति ।

"अलं क्रोधेन । भवता साङ्केतिकरूपेण अल्पं धनं दत्तं चेत् पर्याप्तम् । अधिकधनस्य इच्छा नास्ति मम" इति अवदत् शिवः ।

"किञ्चित् धनं दत्त्वा पूजां कारयाम" इति अवदत् मञ्जूबायी अपि ।

"अस्तु । अहम् पैसामात्रं ददामि, न ततोऽपि अधिकम्" इति अवदत् श्रेष्ठी ।

"भवतु नाम" इति अवदत् शिवः ।

लालश्रेष्ठी तत्पत्नी च स्नानं कृतवन्तौ । मन्त्रम् उच्चार्य हस्तम् उन्नीय आशीर्वादं कृत्वा शिवः अवदत् – "धनं दीयताम्" इति ।

"अत्रैव धनं दीयते इति तु मया न



उक्तम् । मया अत्र आगमनसमये धनं न आनीतम् एव" इति अवदत् लालश्रेष्ठी ।

"किं तेन ? अहं भवता सह भवद्गृहम् एव आगमिष्यामि" इति अवदत् शिवः । ततः लालश्रेष्ठिना तत्पत्न्या च सह शिवः गतवान् ।

गृहं गतः श्रेष्ठी हस्तपादं प्रक्षाल्य वस्त्रान्तरं धृत्वा बहिः आगत्य अवदत् – "अद्य धनं नास्ति मम गृहे । अग्रे कदाचित् दास्यते" इति ।

"श्वः आगमिष्यामि" इति उक्त्वा निर्गतः शिवः अनन्तरदिने पुनः श्रेष्ठिनः गृहम् आगतवान् । श्रेष्ठी कमपि व्याजम् उक्त्वा अर्चकरूपिणं शिवं प्रतिप्रेषितवान् । एवमेव बहुवारं प्रवृत्तम् । शिवः प्रतिदिनं श्रेष्ठिनः गृहम् आगत्य धनं याचति स्म । प्रत्येकस्मिन्नपि दिने श्रेष्ठी कमपि व्याजं

वदति स्म ।

'प्रतिदिनम् अपि धनदानं निराक्रियते चेत् अर्चकः खिन्नः सन् आगमनं परित्यजेत्' इति श्रेष्ठिनः चिन्तनम् आसीत्। किन्तु शिवः कदाचिदपि आगमनं न परित्यक्तवान् ।

'कथमपि एषः निवारणीयः' इति श्रेष्ठिनः चिन्तनम् । अतः एकस्मिन् दिने सः पत्नीम् अवदत् - "अद्य यदा अर्चकः आगमिष्यति तदा भवती तं वदतु यत् मम पतिः दिवं गतः इति" इति ।

मङ्गूबायी अनिच्छन्ती अपि पत्युः आदेशं पालितवती ।

"अहो ! महतः विषादस्य विषयः अयम्। वत्से ! भवत्याः पतिः धनव्ययं सर्वथा न इच्छति स्म । अतः एतस्य शवम् अहम् एव नदीघट्टं नेष्यामि, येन धनव्ययः निवारितः भवेत् । उत्तरक्रियार्थं धनव्ययः न जातः इत्येतत् दृष्ट्वा तदीयः आत्मा तृप्तः भवेत्" इति अवदत् शिवः ।

ततः प्रकोष्ठे शवः इव शयितवन्तं श्रेष्ठिनम् उन्नीय नदीतीरं प्रति प्रस्थितवान् शिवः ।

'इदानीं मम कार्यतन्त्रं यदि अहं न परिवर्तयेयं तर्हि एषः मां नद्यां क्षेप्स्यति एव' इति विचिन्त्य श्रेष्ठी अर्चकस्य स्कन्धात् झटिति अवतीर्णवान् । भूमौ स्थित्वा सः अवदत् - "अहं मृतः आसम् । किन्तु पुण्यपुरुषस्य भवतः स्पर्शात् अहम् उज्जीवितः । धन्यः अस्मि । धन्योऽहम्" इति ।

भगवान् शिवः तु सर्वं जानाति स्म एव । सः स्वस्य वास्तविकं रूपं दर्शयन् अवदत् - "वत्स ! सम्पत्तेः रक्षणविषये भवता या विशेषास्था दर्श्यते सा एव आध्यात्मिकजीवने दर्शनीया भवता । तदस्तु, भवद्विषये सुप्रीतः अस्मि । कमपि वरं याचतु" इति

तदा करौ योजयित्वा श्रेष्ठी अवदत् - "देव ! पैसात्मकं धनं मया दातव्यं यथा न स्यात् तथा वरेण अनुगृह्णातु" इति ।

विषादपूर्णः हासः शिवस्य मुखे उद्भूतः । अदृश्यरूपेण स्थितां पार्वतीं भावगर्भित-दृष्ट्या दृष्ट्वा श्रेष्ठिनम् उद्दिश्य - "तथास्तु" इति उक्त्वा ततः अदृश्यः अभवत् सः ।

देव्याः पार्वत्याः मुखं खेदेन म्लानम् आसीत् । शिवः ताम् अवदत् - "यत् भक्तेन न प्रार्थितं तत् दातुं न अर्हामः वयम् । यावत् याचितरि विवेकः न उद्भवेत् तावत् किमपि कर्तुं न शक्नुमः, ऋते प्रतीक्षायाः" इति ।



# वार्ताविशेषः

## अतिविशिष्टा गोष्ठी

'लिम्का'पुस्तकं 'गिन्नीस्'पुस्तकवत् न विश्वस्तरीयान् विशेषान् ज्ञापयति, अपि तु भारतस्थान् विषयविशेषान् सङ्गृह्णाति । 'लिम्का'जनैः एषु दिनेषु नवदेहल्यां काचित् गोष्ठी आयोजिता आसीत् । तत्र त्रिंशज्जनाः स्वप्रतिभां प्रदर्शितवन्तः । कस्मिंश्चिदपि पुस्तके स्वस्य नाम्नः उल्लेखः भवतु इति उद्देशः तु न आसीत् तेषाम् । तेषु अन्यतमः विजयवाडीयः सेशुबाबु दशनिमेषाधिक-त्रिंशद्घण्टाः यावत् निश्चलतया स्थित्वा गिन्नीस्पुस्तके स्वनाम योजयितुं शक्तवान् ।




गोष्ठीसमाप्तिपर्यन्तं सः स्थितः एव आसीत् । 'भारत-गौरव'नामकस्य तस्य गोष्ठीकार्यक्रमस्य आयोजकाः वदन्ति यत् एतादृशः अवकाशः जीवने कदाचित् एव प्राप्यते, तदवसरे एते प्रदर्शनोत्सुकाः स्वस्य शारीरकीं, मानसिकीं च शक्तिं बलात् विस्तारयन्ति इति ।

## दन्तसामर्थ्यम्




भारतमूलः मलेशियावासी वि. राधाकृष्णन् २६० टन्भारयुतान् षट् रेल्वेप्रकोष्ठान् ४ मीटर्दूरं (१५ पादमितं दूरम्)दन्तैः आकृष्टवान् इति श्रूयते ।

एषा विशिष्टा घटना कौलालम्पुर-नगरे प्रधानमन्त्रिणः महाथिर-महम्मवर्यस्य पुरतः प्रवृत्ता । ३७ वर्षीयः शक्तिशाली एषः 'तरुणः' प्रतीक्षते यत् स्वनाम 'गिन्नीस्'पुस्तके योजितं भवेत् इति ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५० पारितोषिकत्वेन

**अधस्तनकथा पठ्यताम् –**

सोनपुरस्य जनाः एकं मन्दिरं निर्माय देवस्य दैनन्दिनपूजार्थं कश्चित् अर्चकं नियोजितवन्तः ।

तस्य अर्चकस्य दुराशा अधिका । सः अवगतवान् यत् देवे ग्रामीणानां परमा भक्तिः अस्ति इति । अतः सः अचिन्तयत् – 'एतेषां दैवभक्तिम् उपयुज्य आधिक्येन वैयक्तिकः लाभः प्राप्तुं शक्यः' इति ।

अथ कदाचित् सः देवपूजार्थं मन्दिरं प्रति न गतः एव । अपराह्ने ग्रामीणैः अयं विषयः ज्ञातः । ते अर्चकसमीपम् आगत्य पृष्टवन्तः – ''किमर्थम् एवं कृतम् ?'' इति ।

तदा अर्चकः अवदत् – ''गतरात्रौ देवः मम स्वप्ने आगत्य अवदत् यत् एतादृशं सामान्यवस्त्रधारिणं मम अर्चकत्वेन द्रष्टुम् अहं न इच्छामि इति । देवस्य तोषणाय मया कौशेयवस्त्रं सुवर्णहारः च धर्तव्यः एव । अन्यथा देवः कुपितः भविष्यति'' इति ।

तस्मिन् एव दिने ग्रामीणाः सर्वे सम्भूय समालोच्य निर्णयं कृतवन्तः ।

- अर्चकः कौशेयवस्त्रम् आभरणानि च धर्तुं यथा शक्नुयात् तथा तदीयं वेतनं वर्धनीयम् इति किं तैः निर्णीतं स्यात् ?
- 'देवस्य पूजा अनुवर्तताम्, देवस्य अग्रिमाम् आज्ञां प्रतीक्षामहे' इति उक्तवन्तः स्युः किं ते ?
- अन्यस्य अर्चकस्य नियुक्तिः एव किं चिन्तिता स्यात् ग्रामीणैः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् –**

**अन्तिमः दिनाङ्कः ३०, जून् २००४**

नाम ------------------------ वयः ---------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------------- कक्ष्या ----------

गृहसङ्केतः ------------------------------------------------

------------------------------------------------------------

---------------------------------- Pincode ----------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

# THE ADVENTURES OF G-man



## खतरनाक टापू पर पिकनिक
## भाग I

प्रस्तुतकर्ता




POWER SUPPLY

# TERROLENE
## THE MASTER OF DARKNESS

टेरोलीन, अंधेरों का बादशाह. दौलतमन्द और शक्तिशाली टेरोलीन अपराध और आतंक की दुनिया का बेताज बादशाह है. वह हर नियम को तोड़ने में विश्वास रखता है. वह बच्चों का अपहरण करता है और उनके अंदर की एनर्जी को निकालकर अपने प्लान को पूरा करने में लगाता है.

...लीन के
...प से निकलती
...ली गैस की कोई
बेहोश हो जाए. पाइप
सिरे पर लगे
...सी ऐंटीडोट
...न्टर) के
...रण वह
...स गैस से
...चा रहता है.










इसकी छड़ी में एक छोटा सा टीवी स्क्रीन है जिससे वह अपने पूरे साम्राज्य पर नज़र रखता है.

टेरोलीन के कपड़ों को स्टील और कॉटन के धागों से बुनकर बनाया गया है. इसमें किसी तरह की सिलवटें नहीं पड़तीं, यहां तक की परमाणु विस्फोट में भी.




कहीं पर तुरंत पहुंचने के लिए टेरोलीन के जूतों में पावरफुल जेट इंजन लगे हुए हैं.

# SURYARAJ

उस दिन भारतीय सेना की 4 थी रेजिमेंट का जवान लड़ रहा था अपनी आखिरी जंग,
हिमालय में शत्रुओं पर हमला करने के लिए वह डटा रहा.









बदतमीज आंटी जी,
मैं रहूंगा हमेशा
जवान...


...हीं किसी रोज पश्चिमी घाट पर...
एक बस सरपट दौड़े जा रही थी पंचगनी - एक खूबसूरत हिल स्टेशन.


...ों की स्कूल पिकनिक जा रही थी.
राहुल, खिड़की के बाहर हाथ मत डालो.


...चानक...


...स जोरों से हिलने लगी.
शायद भूकंप आया है... या फिर चट्टाने खिसक रही हैं.


ड्राइवर का बस से नियंत्रण छूट जाता है.



# यात्रिकः

जेन्द्रपुरस्य सीमायां काचित् जीर्णा धर्मशाला आसीत् । निरन्तरवृष्टितः आत्मनः रक्षणाय केचन एकैकशः तत्र आगताः । तेषु उभौ युवकौ । तृतीयः आसीत् कश्चन वृद्धः । तस्य दीर्घं श्वेतश्मश्रु आसीत् । चतुर्थः आसीत् कश्चन युवकः । तस्य दर्शनात् भासते स्म यत् एषः श्रमस्य अनिच्छुः सुखाभिलाषी तरुणः इति ।

निद्रा शीघ्रं न प्राप्ता इत्यतः तौ तरुणौ सम्भाषणम् आरब्धवन्तौ । वृद्धः तु वृष्टिं पश्यन् क्षीणस्वरेण किमपि गायति स्म । सुखाभिलाषी तरुणः पादौ प्रसार्य काकनिद्रासुखम् अनुभवति स्म ।

तौ युवकौ वार्तालापात् परस्परपरिचयं प्राप्तवन्तौ । तयोः एकस्य नाम आनन्दः । अपरस्य नाम सुनन्दः इति ।

''भवान् कुत्रत्यः ? कुतः आगतम् ? कुत्र गम्यते भवता ?'' इति आनन्दम् अपृच्छत् सुनन्दः ।

''अहं राघवेन्द्रपुरीयः । मद्देशे मया लघुः उद्योगः अपि कोऽपि न प्राप्तः । ये अधिकारिणां धनिकानां वा बान्धवाः भवन्ति तैः एव उद्योगः प्राप्यते तत्र । अल्पस्य उद्योगस्य निमित्तम् अपि सामान्यैः प्रभूततया उत्कोचः दातव्यः भवति । अहं तु अकिञ्चनः । अतः मया कथम् उद्योगः प्राप्येत तत्र ? मया श्रुतं यत् राजेन्द्रपुरे योग्यतानुगुणः उद्योगः प्राप्यते इति । अहं संस्कृते गणितशास्त्रादिषु च प्रवीणः अस्मि । अतः अत्र कुत्रचित् अध्यापकोद्योगः प्राप्येत इति विचिन्त्य अहम् अत्र आगतः । तदस्तु, भवान् कुतः आगतः ? कुत्र वा गम्यते भवता ?'' इति अपृच्छत् आनन्दः ।

एतत् श्रुत्वा सकृत् हसित्वा अवदत् सुनन्दः - ''दूरतः पर्वतो रम्यः इति वचनं सत्यम् एव । भवतः या स्थितिः सा एव स्थितिः ममापि । अहम् एतद्देशवासी एव । खड्गयुद्धे अश्वचालने च अहं दक्षः अस्मि । तथापि



सामान्यः सैनिकोद्योगः अपि मया अत्र न प्राप्तः । मया भवतः देशस्य प्रशंसा श्रुता । योग्यतानुगुणं तत्र उद्योगः प्राप्यते इति श्रुत्वा अहं भवद्देशं प्रति प्रस्थितः । किन्तु भवतः कथनात् ज्ञायते यत् आवाभ्यां यत् श्रुतं तत् सर्वथा मिथ्या इति । मिथ्याप्रचारं श्रुत्वा आवां वञ्चितौ जातौ'' इति ।

''देशद्वये अपि एवं मिथ्याप्रचारं के कुर्वन्तः स्युः ? तेषाम् उद्देशः कः स्यात् ? एतेन किं वा प्रयोजनं तेषाम् ?'' इति स्वगतम् इव अवदत् आनन्दः ।

वृद्धः तयोः सम्भाषणं शृण्वन् आसीत् । सः तौ अवदत् - ''एतस्य उत्तरम् अहं जानामि । मया विविधेषु देशेषु सञ्चारः क्रियते । एतादृशः प्रचारः सर्वेषु देशेषु दृश्यते । योग्यं शासनं राजमात्रेण कर्तुं न शक्यम् । मन्त्रिणः सेनाधिपतयः कोषागारस्य प्रमुखाः, अन्ये अधिकारिणः च यदि सहकुर्वन्ति तर्हि एव एतत् शक्यम् । मन्त्रिप्रभृतयः राज्ञः तोषणाय एतादृश्याः वार्तायाः प्रसारं कारयन्ति । तस्याः श्रवणतः राजा सन्तुष्टः भवति, मन्त्रिप्रभृतिषु धनदानाद्यनुग्रहं करोति च । एतादृश्याः वार्तायाः प्रसारतः अन्येषु देशेषु एतस्य देशस्य विषये आदरः वर्धिष्यते । एतादृशं मिथ्यादरं श्रुत्वा राजा अभिमानं वहति'' इति ।

''किम् एतां परिस्थितिं परिवर्तयितुं कोऽपि मार्गः नास्ति ?'' इति पृष्टवन्तौ आनन्द-सुनन्दौ ।

''कुतो न स्यात् ? प्राचीने काले राजानः प्रजाहितम् एव कर्तव्यं मन्यन्ते स्म । छद्मवेषं धृत्वा देशे सञ्चारं कुर्वन्ति स्म ते । जनानां समस्याः प्रत्यक्षं पश्यन्ति स्म । तासां परिहाराय योजनाः कुर्वन्ति स्म च । किन्तु अद्य तथा नास्ति । अधिकारिभिः यत् उच्यते तत्र विश्वसन्ति ते । अतः अधिकारिणः स्वेच्छया व्यवहरन्तः दृश्यन्ते । राजानः अद्यापि उत्तमाः एव । किन्तु ते समस्याः सम्यक् न अवगच्छन्ति इत्यतः एषा स्थितिः । एतस्य परिहारः नाम जनसङ्घटनम् । जनाः सम्भूय राजानं समस्याः वदेयुः । राज्ञः अवधानम् आकर्षेयुः । एतदर्थं जनशिक्षणम् अपि आवश्यकम् । भवादृशानां कर्तव्यं तदेव भवेत् । तदा राज्ये उत्तमा स्थितिः भवेत्'' इति अवदत् सः वृद्धः ।

द्वारसमीपे स्थितः सः सुखाभिलाषी पुरुषः एतत् सम्भाषणं समग्रम् आसक्त्या शृण्वन्

आसीत् ।

यदा वृद्धस्य कथनं समाप्तं तदा सः झटिति उत्थाय तेषां समीपे उपविश्य अवदत् - ''महाशयाः ! मया भवतां सम्भाषणं श्रुतम् । देशस्य शासनम् उत्तमं यथा स्यात् तथा व्यवस्थां करिष्यामि अहम् अचिरात् एव'' इति ।

ततः सः सुनन्दं पश्यन् - ''सुनन्द ! भवता राजेन्द्रपुरे एव योग्यतानुगुणः उद्योगः यथा प्राप्येत तथा करिष्यामि । राघवेन्द्रपुरे आनन्दस्य अपि तादृशम् एव उद्योगं दापयितुं प्रयासं करिष्यामि । तत्रत्यः राजा मम सुहृत् एव'' इति अवदत् ।

''महाशय ! एतादृशम् आश्वासनं यच्छन् भवान् कः इति अस्माभिः न ज्ञातम्'' इति उक्तवन्तौ आनन्दसुनन्दौ । तयोः स्वरे उपहासः मिश्रितः आसीत् इव ।

तदा सः मन्दहासपूर्वकम् - ''अहम् अस्य राजेन्द्रपुरस्य युवराजः राजवीरः अस्मि । अचिरात् एव मम पट्टाभिषेकः भविष्यति । सिंहासनारोहणात् पूर्वं देशस्य स्थितिः प्रत्यक्षं द्रष्टव्या इति उद्देशेन अहं छद्मवेषं धृत्वा देशसञ्चारं कुर्वन् अस्मि'' इति उक्त्वा स्वस्य शिरसि स्थितम् उष्णीषं, मुखस्थं श्मश्रु इत्यादिकम् अपनीतवान् ।

एतत् दृष्ट्वा आनन्दसुनन्दौ आश्चर्यचकितौ जातौ । तौ भयेन, भक्त्या, विनयेन च तं युवराजं नमस्कृतवन्तौ ।

प्रतिप्रणामं समर्पयन् युवराजः वृद्धम् अवदत् - ''राज्ये स्थिताम् अनीतिं निवारयितुं राज्ञा एकेन एव न शक्यते । अधिकारिणः अपि धर्ममार्गानुयायिनः भवन्ति चेदेव साध्यं तत् । जनाः अपि जागरिताः स्युः । जनानां समस्यायाः ज्ञानाय राज्ञा निरन्तरः प्रयासः करणीयः इति भवता यत् उक्तं तत् अनुमन्यते मया । एतद्विषये भवतः मार्गदर्शनं साहाय्यं चापि इष्यते मया । अचिरात् एव राजधान्यां प्रचलिष्यमाणे पट्टाभिषेकोत्सवे उपस्थाय आशीर्वादः करणीयः इति मम सविनय-प्रार्थना । भवादृशैः क्रियमाणः आशीर्वादः शुभफलं दास्यति निश्चयेन'' इति ।

वृद्धः मन्दहासपूर्वकम् 'तथैव भवतु' इति युवराजम् उक्त्वा हस्तम् उन्नीय आशीर्वादं कृतवान् ।






# योग्यं मूल्यम्

यस्मिन् काले राजा ब्रह्मदत्तः काशीराज्यं पालयति स्म, तस्मिन् एव काले बोधिसत्त्वः तस्यैव राज्यस्य क्रयाधिकारित्वेन नियुक्तः आसीत् । क्रयणविषये तस्यैव निर्णयः अन्तिमः । तेन यत् मूल्यं निर्णीयते स्म, तदेव राज्ञा अनुमन्यते स्म । अतः क्रयाधिकारिणः व्यवहारज्ञानं प्रमुखं भवति स्म ।

बोधिसत्त्वः काशीराजस्य उपयोगार्थं गजानाम्, अश्वानां, सुवर्णरजतवज्रादीनां च परीक्षां कृत्वा स्वस्य गणनानुगुणम् एव मूल्यनिश्चयं कृत्वा वणिग्भ्यः योग्यं धनं दापयति स्म । तेन निश्चीयमानं मूल्यं वणिजाम् अपि तृप्तिकरं भवति स्म । अतः सर्वे तस्य व्यवहारस्य विषये सन्तुष्टाः आसन् ।

किन्तु राजा ब्रह्मदत्तः लोभी आसीत् । अतः सः क्रयाधिकारिणः बोधिसत्त्वस्य विषये सन्देहग्रस्तः जातः । एषः वस्तूनि अधिकमूल्येन क्रीत्वा वणिग्भ्यः प्रभूतं धनं दापयति इति राज्ञा श्रुतम् आसीत् ।

'एतत् सत्यमेव स्यात् । यदि एवमेव सर्वदा प्रवर्तेत तर्हि मम कोषागारम् अचिरात् एव रिक्तं भवेत्' इति चिन्तितवान् राजा ।

कदाचित् सः अन्तःपुरे उपविश्य उद्यानस्य दिशि विद्यमानं वातायनम् उद्घाटितवान् । तदा तत्र आतपे महता श्रमेण सस्यानि जलेन सिञ्चन् कश्चन सेवकः तेन दृष्टः ।

'एषः एव अत्यन्तं विश्वासयोग्यः' इति चिन्तितवान् राजा अनन्तरदिने एव तं सेवकं नूतनक्रयाधिकारित्वेन नियुक्तवान् ।

'एषः नूतनः क्रयाधिकारी वाणिज्यवस्तूनां प्राणिनां च मूल्यविषये मह्यं बहु लाभं दापयेत्' इति राजा चिन्तयति स्म । सः नूतनः क्रयाधिकारी तु अल्पज्ञः आसीत् । सः वस्तूनां गुणावगुणान् न जानाति स्म । पशूनां ज्ञानं तु सर्वथा न आसीत् तस्य । अतः पशूनां, वस्तूनां वा क्रयणं यदा करणीयं भवति तदा यत् मूल्यं मनसि आगच्छति तदेव वदति स्म सः । अतः बहवः वणिजः हानिम् अनुभूतवन्तः ।

तथापि एषः नूतनः क्रयाधिकारी राज्ञा एव नियुक्तः इत्यतः ते यावत् लब्धं तावत् एव स्वीकृत्य मुखं म्लानीकृत्य गच्छन्ति स्म ।

कदाचित् उत्तरदेशात् कश्चन अश्ववणिक् उत्तमजातीयान् पञ्चशतम् अश्वान् आनीतवान् काशीराजाय विक्रयणार्थम् । एतत् ज्ञातवान् राजा क्रयाधिकारिणम् आदिशत् – ''योग्यतां परीक्ष्य एतेषां मूल्यं निश्चिनोतु'' इति ।

क्रयाधिकारी आगत्य पञ्चशतम् अश्वान् अपि परीक्षितुम् आरब्धवान् । अश्वानां पुच्छं गृह्णन्, पृष्ठं ताडयन् परीक्षां कृतवान् सः ।

''एतेषां पञ्चशतस्य अश्वानां मूल्यं गोणीमितेन तण्डुलेन समं स्यात् । अतः तावत् तण्डुलं दत्त्वा सर्वान् अश्वान् अश्वालये बध्नन्तु'' इति आदिष्टवान् सः ।

एतत् श्रुत्वा अश्ववणिक् दिग्भ्रान्तः । सः अन्यवणिजः इव मौनं न आश्रितवान् । सः साक्षात् पुरातनस्य क्रयाधिकारिणः बोधिसत्त्वस्य समीपं गत्वा प्रवृत्तं सर्वं विवृतवान् ।

बोधिसत्त्वः सर्वमपि वृत्तान्तं श्रुत्वा उक्तवान् – ''भोः, भवान् एकं कार्यं करोतु । नूतनम् एतं क्रयाधिकारिणं तर्पयितुं किञ्चित् उत्कोचं दत्त्वा – 'गोणीमितस्य तण्डुलस्य मूल्यं किम् इति भवान् श्वः राजसभायां वदतु । तत् श्रुत्वा राजा भवन्तं सम्मानयेत्' इति उक्त्वा राजसभां प्रति नयतु । अहं तत्र स्थित्वा भवते न्याय्यं मूल्यं दापयिष्यामि'' इति ।

एतेन अश्ववणिक् किञ्चिदिव समाहितः । बोधिसत्त्वः यथा उक्तवान् तथैव सः अश्ववणिक् क्रयाधिकारिणे उत्कोचं दत्त्वा तं सम्यक् प्रशंसितवान् ।



क्रयाधिकारी उत्कोचं स्वीकृत्य सन्तोषेण वणिजः प्रार्थनाम् अङ्गीकृतवान् । अनन्तरदिने राज्ञः आस्थाने मन्त्रिणः, पुरप्रमुखाः, प्रमुखाः अधिकारिणः इत्यादयः सर्वे सम्मिलिताः । बोधिसत्त्वः अपि उपस्थितः आसीत् ।

हानिम् अनुभूतवान् अश्ववणिक् राजानम् उद्दिश्य उक्तवान् – ''प्रभो ! भवतः राज्यस्य क्रयाधिकारिणा मम पञ्चशतस्य अश्वानां मूल्यं गोणीपरिमितस्य तण्डुलस्य मूल्येन समानम् इति निर्णीतम् अस्ति । गोणीमितस्य तण्डुलस्य मूल्यं कियदिति न ज्ञातं मया'' इति ।

राजा वणिजः वचनं श्रुत्वा आश्चर्यम् अनुभवन् क्रयाधिकारिणं पृष्टवान् – ''अश्वाः कियता मूल्येन क्रीताः ?'' इति ।

''एकगोणीपरिमितस्य तण्डुलस्य यत् मूल्यं तदेव मूल्यं तेषाम् अपि निश्चितवान् अस्मि महाप्रभो !'' इति उक्तवान् क्रयाधिकारी ।

''एवम् ! युक्तम् एतत् । गोणीपरिमितस्य तण्डुलस्य किं मूल्यं भवति इति किं भवान् जानाति ?'' इति अपृच्छत् राजा ।

आस्थानस्य क्रयाधिकारी अनुक्षणम् एव अवदत् - ''गोणीपरिमितस्य तण्डुलस्य मूल्यं बहु अधिकम् एव । एतस्य काशीराज्यस्य, समीपस्थानां सामन्तराज्यानां च यावत् मूल्यं भवेत् तावत्'' इति ।

तस्य क्रयाधिकारिणः वचनं श्रुत्वा सभासदः करताडनं कुर्वन्तः उच्चैः हसितवन्तः ।

यदा हासस्य ध्वनिः न्यूनः जातः तदा कश्चन प्रमुखः उत्थाय, नूतनं क्रयाधिकारिणं पश्यन् - ''एतावत्पर्यन्तं वयं राज्यानि अमूल्यानि इति चिन्तितवन्तः आस्म । किन्तु काशीराज्यस्य सामन्तराज्यानां च मूल्यं गोणीपरिमितस्य तण्डुलस्य मूल्यात् अपि न्यूनम् अस्ति इति इदानीमेव ज्ञातम् अस्माभिः । अहो ! अस्य बुद्धिशक्तिः अपूर्वा एव'' इति उपहासपूर्वकम् उक्तवान् ।

तदा बोधिसत्त्वः सभायाः पुरतः आगत्य - ''एषः क्रयाधिकारी यत् उक्तवान् तत् परमसत्यम् अस्ति । अत्र ऊहायोग्यं किमपि नास्ति । सः स्वस्य स्तरानुगुणम् एव गणितवान् अस्ति । पञ्चशतस्य अश्वानां मूल्यं गोणीपरिमितेन तण्डुलमूल्येन तुल्यम् इति, गोणीपरिमितस्य तण्डुलस्य मूल्यं काशीराज्यसामन्तराज्यानां मूल्यादपि अधिकम् इति च सः उक्तवान् अस्ति । अत्र सः सुवर्णमुद्राः तण्डुलशब्देन निर्दिष्टवान् अस्ति । पञ्चशतस्य श्रेष्ठजातीयानाम् अश्वानाम् मूल्यनिश्चयार्थम् अहम् असमर्थः, तेषां कृते यावत् मूल्यं दीयते चेदपि अपर्याप्तं भवति इति परोक्षतया उक्तवान् अस्ति सः । अतः तेन न्याय्यं मूल्यमेव निर्णीतम् अस्ति इत्यत्र नास्ति सन्देहः'' इति उक्तवान् ।

बोधिसत्त्वस्य वचनं सर्वे सम्मतिपूर्वकम् अङ्गीकृतवन्तः ।

एतया घटनया काशीराजः स्वस्य दोषम् अवगतवान् । अज्ञानिनं कञ्चित् क्रयाधिकारिणः स्थाने नियुक्तवान् अहमेव दोषी इति मत्वा सः तं निष्कास्य बोधिसत्त्वाय तत् पदं दत्तवान् । बोधिसत्त्वः पुनरपि क्रयाधिकारित्वेन नियुक्तः जातः । विदेशीयः अश्ववणिक् योग्यं मूल्यं प्राप्तवान् ।





# विष्णुपुराणम्

हिरण्यकशिपुः प्रह्लादम् आलिङ्ग्य - ''प्रह्लाद ! भवतः कारणतः एतावतां वर्षाणाम् अनन्तरं विष्णुना सह युद्धाय अवसरः प्राप्तः अस्ति मया'' इति उक्त्वा गदाम् उन्नीय नरसिंहेन सह युद्धाय उद्युक्तः जातः । नरसिंहः उत्प्लुत्य अग्रे गत्वा हिरण्यकशिपुं गृहीत्वा आकृष्य सभाभवनं नीतवान् ।

एतदनन्तरं सः द्वारस्य देहल्यां, सन्ध्यासमये स्वस्य अङ्के नखैः हिरण्यकशिपोः उदरं भित्त्वा मारितवान् । देहली न अन्तर्भागत्वेन गण्यते, न वा बहिर्भागत्वेन । सन्ध्याकालः न दिवा, न वा रात्रिः । तदीयः अङ्कः न भूमिः, न वा आकाशः । नखाः न सजीवाः न वा निर्जीवाः । एवं यादृशं मरणं न भवेत् इति हिरण्यकशिपुना वरः प्राप्तः आसीत् तस्मात् सर्वथा भिन्नेन प्रकारेण नरसिंहः हिरण्यकशिपोः संहारं कृतवान् आसीत् । एतत् दृष्ट्वा सर्वे राक्षसाः आक्रमणाय उद्युक्ताः । किन्तु विष्णुचक्रं तेषां सर्वेषां संहारम् अकरोत् ।

आन्त्रमालां पुष्पहारम् इव धृत्वा विजृम्भमाणम् अट्टहासं कुर्वन्तं नरसिंहं दृष्ट्वा सर्वे देवाः भीताः । लक्ष्मीदेवी अपि भीता । प्रह्लादः स्तुत्या तस्य शान्ततां कल्पितवान् ।

'पितुः अन्त्येष्टिं सम्पादयतु । राज्यं यथायोग्यं पालयतु च' इति प्रह्लादम् आदिश्य आशीर्वादं कृत्वा नरसिंहः अदृश्यः जातः । एवं जयविजययोः प्रथमं जन्म समाप्तम् ।

विष्णोः आदेशस्य अनुगुणं प्रह्लादः चिरकालं यावत् राज्यं पालितवान् । ततः पुत्रं विरोचनं सिंहासने उपवेश्य विष्णुभक्त्या प्रेरितः सन् अरण्यं गतवान् तपसे ।

विरोचनस्य दिवं गतेः अनन्तरं तदीयः पुत्रः बलिः सिंहासनम् आरूढवान् । क्षीरसागरमथनसमये उच्चैःश्रवोनामकः यः अश्वः



प्राप्तः तं स्वायतीकृतवान् सः । राक्षसानां शिल्पी मयः स्थल-जल-गगनेषु सञ्चारं कर्तुं समर्थं वाहनं सज्जीकृत्य तस्मै दत्तवान् ।

अमृतवितरणसमये राक्षसानां विषये यत् अन्याय्यं प्रवृत्तं तद्विषये प्रतीकारं साधयितुम् इच्छन् बलिः देवैः सह युद्धाय सन्नद्धः जातः । देवाः महता धैर्येण राक्षसान् सम्मुखीकृतवन्तः । इन्द्रबल्योः घोरं युद्धं प्रवृत्तम् । एतस्मिन् सङ्ग्रामे दानवाः घोरं पराजयं प्राप्तवन्तः । राक्षसानां गुरुः शुक्राचार्यः सञ्जीविनीविद्यया मृतान् राक्षसान् उज्जीवितवान् ।

बलिः पुनरपि राक्षसान् सङ्घटय्य युद्धम् उद्घोषितवान् । एतदवसरे दानवैः एव विजयः प्राप्तः । स्वस्य राज्यं विस्तार्य बलिः समग्रस्य भूमण्डलस्य आधिपत्यं प्राप्य चक्रवर्ती इति कीर्तिं सम्पादितवान् । शुक्राचार्यः तस्य द्वारा एकम् अश्वमेधयागं कारितवान् ।

एतदनन्तरं बलिः स्वर्गस्य आक्रमणाय उद्युक्तः । बलेः पराक्रमं दृष्ट्वा भीताः देवाः स्वर्गात् पलाय्य अरण्यम् आश्रितवन्तः । दिक्पालाः बलेः आदेशस्य पालकाः जाताः । स्वर्गमर्त्यपातालान् न्याय्येन मार्गेण धर्मपूर्वकं पालितवान् सः ।

तस्मिन् अवसरे इन्द्रस्य माता अदितिः पतिं कश्यपम् अवदत् - "आवयोः पुत्रः इन्द्रः शचीदेवीसहिततया अरण्ये वसन् अनन्तानि कष्टानि अनुभवति । सः पुनरपि स्वर्गाधिकारं यथा प्राप्नुयात् तथा कोऽपि उपायः आश्रयणीयः भवता" इति ।

तदा कश्यपः अवदत् - "भक्त्या विष्णुः आराधितः चेत् समस्या परिह्रियेत" इति ।

कश्यपस्य उपदेशस्य अनुगुणम् अदितिः विष्णुम् आराधनेन तोषितवती । तदा विष्णुः अवदत् यत् अचिरात् एव भवत्याः गर्भे जन्म प्राप्य देवेभ्यः पुनः स्वर्गं दापयिष्यामि इति ।

एतदनन्तरं विष्णुः अदितिकश्यपयोः पुत्रत्वेन जन्म प्राप्तवान् । एवं दशावतारेषु अन्यतमस्य वामनावतारस्य आरम्भः जातः ।

वामनः उपनयनस्य अनन्तरं सर्वाः विद्याः अधीत्य पण्डितः जातः ।

तेषु दिनेषु नर्मदानद्याः तीरे शुक्राचार्यस्य नेतृत्वे बलिः विश्वजिद्यागस्य आरम्भं कृत्वा अपारायाः सम्पत्तेः दानं कुर्वन् आसीत् ।

वामनः हिरण्यचर्म धृत्वा एकेन हस्तेन कमण्डलुम्, अपरेण छत्रं च गृहीत्वा पादरक्षां धृत्वा मूर्तीभूतेन ब्रह्मतेजसा युक्तः सन् बलिचक्रवर्तिनः समीपं गतवान् ।

तं दृष्ट्वा यज्ञशालायां स्थिताः सर्वे प्रसन्नतां

प्राप्तवन्तः । वामनः बलिचक्रवर्तिनः समीपं गत्वा जयघोषं कृतवान् ।

वामनस्य दर्शनात् बलेः मनसि आनन्द-तरङ्गाः उद्भूताः । सः वामनम् अपृच्छत् - ''नवं ब्रह्मचर्याश्रमं श्रितवान् भवान् कः ? कुत्र गम्यते भवता ?'' इति ।

''अहम् आत्मानं कमिति परिचाययानि ? सर्वे अपि मदीयाः । तथापि अहम् एकाकी । अपारायाः सम्पदः स्वामी अस्मि, तथापि अद्य याचकः अस्मि । भवतः पितृपिता-महादयः महाशूराः आसन् । भवतः शौर्य-पराक्रमादयः दिगन्तव्यापिनः सन्ति'' इति अवदत् वामनः ।

तदा चक्रवर्ती हसन् अवदत् - ''भवतः वचनं विलक्षणम् अस्ति । भवान् शौर्य-पराक्रमादीनां प्रस्तावं करोति । युद्धार्थं मां प्रेरयति । किन्तु अहम् इदानीं यज्ञदीक्षितः । अतः युद्धम् असम्भवम् इदानीम्'' इति ।

तदा वामनः अवदत् - ''भवता कीदृशं वचनम् उक्तम् ? मया विनोदाय किमपि उक्तम् । वामनः अहं भवता सह कथं योद्धुं शक्नुयाम् ? भवान् अपूर्वः दाता इति श्रुत्वा भवतः स्तुतिं कृत्वा किमपि प्राप्तुं याचकत्वेन अहम् उपस्थितः अस्मि'' इति ।

''महतः सन्तोषस्य विषयः एषः । भवान् यत् प्रार्थयते तत् दातुं सिद्धोऽस्मि अहम् । अपेक्षितं याचताम्'' इति अवदत् बलिः ।

एत् ज्ञात्वा शुक्राचार्यः तम् अवदत् - ''एषः वामनः साक्षात् विष्णुः एव । भवन्तं वञ्चयितुं सः वामनवेषेण आगतः अस्ति । सः भवतः सर्वस्वं लुण्ठयिष्यति । अतः तस्मै



किमपि मा ददातु भवान्'' इति ।

तदा बलिचक्रवर्ती अवदत् - ''भगवान् विष्णुः एव याचकत्वेन मत्समीपम् आगत्य दानस्वीकाराय यदि हस्तं प्रसारयेत् तर्हि ततोऽपि महत् सौभाग्यं किं स्यात् मम ? अन्यच्च, वचनदानानन्तरं तस्य अपालनम् अपकीर्तिकरम् अपि । अकीर्तिः मरणात् अतिरिच्यते ननु ?'' इति ।

''आत्मरक्षार्थं क्रियमाणं यत्किमपि कर्म अनुचितं भवितुं न अर्हति । अनुचितस्य धर्मस्य पालनम् आत्महत्यासदृशं भाव्यते'' इति अवदत् शुक्राचार्यः ।

''एतादृशः व्यवहारः धर्मवीरता इति उच्यते । पूर्वं शिबिचक्रवर्तिप्रभृतयः दानं कृत्वा यादृशं यशः प्राप्तवन्तः तादृशं प्राप्तव्यम् इत्यपि इच्छा नास्ति मम । दत्तं वचनम् अपरिपालयन् भीरुः इति अपख्यातिं प्राप्तुं



"हे दानवराज ! याचकरूपेण आगंतः विष्णुः भवन्तं याचकदशां प्रापयिष्यति, पाताललोकं गमयिष्यति वा । त्रयाणां लोकानाम् आधिपत्यं, सम्पदः, वैभवं च महता श्रमेण सम्पादितानि भवता । शारीरक-सुखस्य अनुभवस्य अनन्तरम् एव खलु धर्मसाधनाय प्रयासः करणीयः ?" इति अबोधयत् शुक्राचार्यः ।

"राज्यसम्पदादयः न शाश्वताः । यथा ते आगच्छन्ति तथैव ते विनश्यन्ति अपि । शरीरम् अपि अशाश्वतम् एव । कीर्तिरिका गरीयसी" इति अवदत् बलिः ।

"एषः विनाशः न केवलं भवतः, अपि तु समग्रस्य दानववंशस्यापि भविष्यति इति किं भवता स्मर्यते ? भवतः एतत् कृत्यम् अस्माकं सर्वेषाम् अपमानकरम् अपि" इति अवदत् शुक्राचार्यः ।

"यदि अन्यया दृष्ट्या पश्येम तर्हि एतत् यशस्करम् अपि । कश्चन दानवः न्याय्येन मार्गेण शासनं कृत्वा धर्मेण प्रजाः परिपाल्य भगवते विष्णवे एव भिक्षां दत्तवान् इति जनाः प्रशंसां कुर्युः अपि । यथा दृष्टिः तथा फलम्" इति उक्त्वा बलिः वामनसमीपं गतवान् ।

तस्य पत्नी विन्ध्यावली सुवर्णकलशेन जलम् आनीय स्वर्णस्थालिकायां विष्णोः पादौ निक्षिप्य क्षालितवती । तत् जलं शिरसि अभ्युक्ष्य बलिः अवदत् - "हे वामन-रूपधारिन् महात्मन् ! भवान् दानप्राप्तये मत्समीपम् आगतवान् यत् तत् मम पूर्वजन्मनः पुण्यस्य फलम् । भवान् यत् इच्छति तत् याचितुम् अर्हति । रत्नानि, सुवर्ण, सुन्दर्यः,

न इच्छामि अहम्" इति अवदत् बलिः ।

एतत् श्रुत्वा शुक्राचार्यः कठोरस्वरेण अवदत् - "भवतः गुरुः सन् अहं यानि हितवचनानि वदामि तानि धिक्कुर्वन् अस्ति भवान् । यदि अहं शापं दद्यां तर्हि भवतः राज्यं सर्वस्वं चापि विनश्येत्" इति ।

तदा बलिचक्रवर्ती विनयपूर्वकम् अवदत् - "गुरुदेव ! शापदानेन भवान् अपकीर्तेः भाजनं भविष्यति । अहं सुखं दुःखं च समानतया स्वीकुर्वन् दानाय सन्नद्धः जातः अस्मि । एतदवसरे भवान् यदि शापं दद्यात् तर्हि सः विष्णोः उपकारकः एव भविष्यति । अन्याय्येन बलेः ऐश्वर्यं स्वीकुर्वन् अस्ति इति अपख्यातिः न भविष्यति तस्य । भवतः शापस्य अन्वयने निमित्तमात्रं भविष्यति सः । अहं तु भवतः शापं विनयपूर्वकम् एव स्वीकरिष्यामि" इति ।

शस्यक्षेत्रं, साम्राज्यम् इत्यादीनि सर्वाणि अहं दातुं सिद्धः । स्वशरीरम् अर्पयितुम् अपि अहं सिद्धः अस्मि एव'' इति ।

''बलिचक्रवर्तिन् ! रत्नादीनां स्वीकारेण किं वा प्रयोजनं मम ? अहं हरिणचर्म प्रसार्य तपः कर्तुम् इच्छामि । तदर्थं पादत्रयपरिमिता भूमिः आवश्यकी'' इति अवदत् वामनः ।

''अस्तु तावत् । त्रिपादपरिमितां भूमिं स्वीकरोतु भवान्'' इति वदन् बलिचक्रवर्ती कलशस्थं जलं हस्तेन स्वीकृत्य दानं कर्तुम् ऐच्छत् । किन्तु जलकलशमुखात् जलं न निर्गतम् । शुक्राचार्यः सूक्ष्मरूपं धृत्वा जलकलशस्य शुण्डाकारके मुखे निलीय तिष्ठन् जलनिर्गमनम् अवरुद्धवान् आसीत् । एतत् अवगतवान् वामनः दर्भाग्रेण जल-कलशस्य शुण्डाभागे रन्ध्रं कल्पितवान् । एतस्मात् शुक्राचार्यस्य एकं नेत्रं दृष्टिहीनं जातम् । अतः सः ततः निर्गतवान् ।

अनन्तरं जलधारा बलिहस्तात् निर्गत्य वामनस्य हस्ते अपतत् । दानविधेः समाप्तेः अनन्तरं बलिः अवदत् - ''इदानीं भवान् त्रिपादमितां भूमिं स्वीकर्तुम् अर्हति'' इति ।

वामनः सर्वतः वर्धमानः विश्वरूपं प्राप्त-वान् । उपरि, अधः, मध्यतः, वामतः, दक्षिणतः च वर्धमानः सः त्रिलोकीम् अपि व्याप्य अतिष्ठत् । एकेन पदेन सः पृथिविम् अभिव्याप्तवान् । त्रिविक्रमस्य विष्णोः चरणच्छायायाः कारणतः समग्रं भूतलं किञ्चित्कालम् अन्धकारेण व्याप्तं जातम् । ततः सः द्वितीयेन चरणनिक्षेपेण आकाशम् अभिव्याप्तवान् । तदवसरे सूर्यचन्द्रनक्षत्रादयः तदीयपादरजांसि इव भान्ति स्म । ब्रह्मा स्वस्य



कमण्डलोः जलेन तदीययोः पादयोः अभिषेकं कृतवान् ।

ततः वामनरूपी विष्णुः बलिम् अपृच्छत् – ''हे बलिचक्रवर्तिन् ! मया तृतीयः पादः कुत्र निक्षेप्तव्यः इति वदतु तावत्'' इति ।

''त्रिविक्रमरूपिन् ! मम एतस्मिन् शिरसि एव निक्षेप्तुम् अर्हति भवान्'' इति स्वशिरः प्रदर्शयन् अवदत् बलिचक्रवर्ती ।

तदा विष्णुः स्वस्य विश्वरूपम् उपसंहृत्य वामनरूपेण तिष्ठन् बलिचक्रवर्तिनः शिरसि पादं स्थापयित्वा अवदत् – ''पृथिवीम् आकाशं च अभिव्याप्नुवन् मम चरणः भवतः शिरसः अभिव्याप्तौ असमर्थः अस्ति'' इति ।

तस्मिन् समये तत्र उपस्थितः प्रह्लादः विष्णुम् अवदत् – ''भगवन् ! मम पौत्रः भवतः शत्रुः न । कृपया तम् आशिषा अनुगृह्णातु'' इति ।

बलेः पत्नी विन्ध्यावली वामनदेवम् अवदत् – ''देव ! मम पत्युः अहितं किमपि यथा न भवेत् तथा अनुगृह्णातु कृपया'' इति ।

''देवि ! कोऽपि भवत्याः पत्युः अहितं कर्तुं न अर्हति । अतः एव मया याचकत्वेन उपस्थाय अपेक्षितं प्राप्तव्यम् अभवत् । तदीयं धार्मिकं बलं न सामान्यम्'' इति विन्ध्यावलीम् उक्त्वा वामनः प्रह्लादस्य दिशि पश्यन् – ''एषः भवतः पौत्रः ममापि प्रियतमः अस्ति'' इति उक्त्वा विविधैः चित्रैः समेतेन वेत्रदण्डेन समेतः सन् तत्र अतिष्ठत् ।

''अये बलिचक्रवर्तिन् ! भवत्समः अद्यावधि कोऽपि न जातः, न भविष्यति अपि । आदर्शशासनं कुर्वत्सु चक्रवर्तिषु भवान् अग्रगण्यः भविष्यति । अहं भवन्तं सुतलं प्रति प्रेषयन् अस्मि । अधोलोकानाम् अधिपतिः चिरञ्जीवी च सन् भवान् सुख-शान्तिपूर्वकं शासनं करोतु । भवतः पत्नी, पितामहः प्रह्लादः चापि भवता सह भविष्यतः । अहं च दण्डपाणिः सन् वामन-रूपेण सुतललोकस्य द्वारे द्वारपालकत्वेन तिष्ठन् भवतः रक्षणं करिष्यामि'' इति उक्त्वा वामनरूपी विष्णुः अन्तर्हितः जातः ।





# दैत्यात् अग्निः अपहृतः

पर्वतं परितः स्थिताः ग्रामीणाः प्रार्थनां कुर्वन्ति स्म यत् एष राक्षसः सर्वदा गुहायां निद्रां कुर्वन् एव भवतु, कदापि गुहातः बहिः मा आगच्छन्तु इति ।

कस्मिंश्चित् ग्रामे चत्वारः चतुराः तरुणाः आसन् । तेषां नामानि आसन् - लेकाबायः, दाकुवाकः, मसीलाकः तुयीवेसः च इति । तस्य राक्षसस्य ज्वलन्तं श्वासं द्रष्टुम्, तस्य मुखात् किञ्चित् अग्निं ग्रहीतुं च तेषाम् इच्छा आसीत् ।

अतिप्राचीने काले अग्नेः प्रयोगः कथमिति मनुष्यः न जानाति स्म । सः अग्निं दृष्टवान् आसीत्, किन्तु तस्य ज्वालनं कथम् इति तेन न ज्ञातम् आसीत् । फिजीनामके द्वीपे रोटुमा-पर्वतस्य कस्याञ्चित् गुहायां हुम्बनामकः कश्चन राक्षसः वसति स्म । तस्य दन्ताः अङ्गाराः इव दृश्यन्ते स्म । सः यदा मुखम् उद्घाटयति तदा तस्य दन्तेभ्यः यः तापः बहिः आगच्छति स्म सः अग्निकुण्डस्य तापः इव भासते स्म ।

भाग्यवशात् सः सर्वदा स्वगुहायामेव निद्रां करोति स्म । कदाचित् एव गुहातः बहिः अगत्य पर्वतम् अवतरति स्म । तदा मार्गे स्थितानि सर्वाणि सस्यानि तस्य श्वासस्य औष्ण्येन भस्मीभूतानि भवन्ति स्म ।

"यदि अग्निः अस्माकं समीपे भवेत् तर्हि जीवनं सुखमयं स्यात्" इति तुयीवेसः उक्तवान् ।

"तदा गृहे अस्माकं पत्न्यः रुचिकरं पाकं कुर्युः" इति दाकुवाकः उक्तवान् ।

"वयम् अन्धकारे प्रकाशं प्राप्तुम् अपि शक्ष्यामः" इति मासीलाकः उक्तवान् ।

तदा लेकाबायः सर्वान् उक्तवान् - "तर्हि आगच्छन्तु, वयं गत्वा तस्य दैत्यस्य मुखात् किञ्चित् अग्निम् आहराम" इति ।

ततः ते साहसिनः युवकाः शुष्कनारिकेल-पत्राणां गुच्छान् स्वीकृत्य राक्षसस्य निवासं पर्वतं प्रति प्रस्थिताः । एतेषां गमनसमये राक्षसः



निद्रायां मग्नः आसीत् ।

एते युवकाः गुहायां स्थितान् पाषाणान्, वस्तूनि च अपसार्य निःशब्दं पादाग्रेण एव अन्तः गताः । पादरवेण राक्षसः उत्तिष्ठेत् इति भयेन दैत्यस्य समीपं गत्वा आनीतान् शुष्क-नारिकेलपत्राणां गुच्छान् तस्य मुखस्य समीपं नीतवन्तः । राक्षसस्य मुखात् निर्गता ज्वाला तान् गुच्छान् अपि ज्वालितवती । हस्ते तापः आगतः इति कारणात् तुयीवेसस्य हस्तात् तत् पत्रं राक्षसस्य ओष्ठे अपतत् । तदा राक्षसः उत्थितः ! दहन्ति पत्राणि स्वीकृत्य धावतः चतुरः युवाकान् सः दृष्टवान् ।

''मम अग्निम् अपहर्तुं प्रयतमानानाम् एतेषां कियद् धार्ष्ट्यम् ? '' इति उच्चैः उक्तवान् सः । तस्य मुखात् अग्निज्वालाः प्रवहन्त्यः आसन् ।

'अस्मिन् द्वीपे अग्निः मम एकस्य समीपे एव भवेत्' इति वदन् निद्रया विमुक्तः सः पर्वतम् अवतरतः चतुरः युवकान् अनुसृतवान् । ते कथञ्चित् धावनं कुर्वन्तः ग्रामस्य समीपे स्थितां काञ्चन गुहां प्रविष्टवन्तः । हस्तेषु स्थितान् ज्वलतः नारिकेलपत्रगुच्छान् रक्षन्तः गुहाद्वारं शिलया पिहितवन्तः ।

''अहो ! हुम्बदैत्यात् वयं रक्षिताः । गुहामुखे स्थितां शिलां सोऽपि अप-सारयितुं न प्रभवति'' इति दाकुवाकः उक्तवान् ।

तेषु किञ्चित् बुद्धिमान् लेका-बायनामकः तरुणः उक्तवान् - ''किन्तु अत्र वयं बहुसमयं स्थातुं न शक्नुमः । अतः अस्मात् राक्षसात् मोक्षः कथम् ? तेन यथा न ज्ञायेत तथा अस्माभिः कथं ग्रामः गन्तव्यः इति विषये इदानीं चिन्तयन्तु'' इति ।

तदा सः राक्षसः गुहायाः पुरतः उपविष्टः सन् उच्चस्वरेण अन्तः स्थितान् उक्तवान् - ''बहिः आगच्छन्तु भवन्तः'' इति ।

कुपितस्य तस्य कर्णाभ्याम् नासिकायाः च अग्निकणाः बहिः आगच्छन्तः आसन् । अरण्ये सर्वत्र ज्वाला प्रसृता इति कारणात् तापः अधिकः अभवत् । तं तापं सोढम् अशक्तः अभवत् राक्षसः । गुहायां स्थितानां युवकानाम् अपि सा एव स्थितिः जाता ।

'यदि जीवितुम् इच्छा अस्ति तर्हि इतः मोचनमार्गः आलोचनीयः' इति राक्षसस्य

युवकानां च मनसि विचारः उत्पन्नः । अतः राक्षसः एव मृदुना स्वरेण उक्तवान् - ''मित्राणि, यदि भवन्तः अन्तः आगन्तुम् अवकाशं ददति तर्हि अहं समीचीनं गीतमेकं श्रावयिष्यामि'' इति ।

तदा युवकानां मनसि कश्चन उपायः स्फुरितः । ते गुहामुखे स्थितां शिलां किञ्चिदेव अपसारितवन्तः ।

सः राक्षसः तेन न सन्तुष्टः । ''मम प्रवेशाय एतावत् स्थलम् अपर्याप्तम्'' इति उक्तवान् सः । सः राक्षसः चिन्तितवान् आसीत् यत् गुहाप्रवेशसमनन्तरम् एव मम श्वासेन सर्वे भस्मसात् करणीयाः इति ।

तदा एव लेकाबायस्य मनसि अन्यः विचारः आगतः । तम् उपायं मन्दस्वरेण सः अन्यान् उक्तवान् । ततः चत्वारः अपि बलम् उपयुज्य शिलायाः नोदनम् इतोऽपि किञ्चित् कृतवन्तः । तदा तत्र स्थलं विशालम् अभवत् । एतत् दृष्ट्वा सः राक्षसः स्वस्य शिरः अन्तः स्थापितवान् । तत्क्षणे एव ते युवकाः तस्याः शिलायाः पुनः नोदनं कृतवन्तः । गुहामुखं पुनः पिहितम् । राक्षसः एतत् न ऊहितवान् आसीत् । सः किमपि कर्तुं न शक्तः । शिलाघट्टनेन तस्य शिरः भग्नं जातम् । सः तत्रैव मृतः । तस्य मुखात् दन्ताः पतिताः । ते दन्ताः शीतलाः कृष्णवर्णीयाश्च सञ्जाताः ।

चत्वारोऽपि मृतं राक्षसं निष्कास्य स्वयं बहिः आगताः । पार्श्वग्रामस्थान् जनान् आहूय ते उच्चैः उक्तवन्तः - ''वयं तं राक्षसं मारितवन्तः स्मः । तस्य दन्ताः इतःपरं न ज्वलन्ति । किन्तु अग्निः न नष्टः । अस्माकं समीपे अस्ति । इतःपरम् अस्माकं जीवनं सुखमयं भविष्यति'' इति ।

ततः ग्रामीणानां राक्षसभयम् अपगतम् । ते अग्नेः प्रयोजनं समीचीनतया प्राप्तवन्तः । अग्नेः साहाय्येन आलुकानि, मीनशाकादीन् च पक्त्वा स्वादुभोजनं प्राप्तुं शक्तवन्तः ते ।





# वज्रखचितः हारः

हेलापुर्यां गुप्तधननामकः वणिक् आसीत् । तस्य गृहे चतुर्दशवर्षीयः सोमशेखर-नामकः कार्यं कुर्वन् आसीत् । सोमशेखरस्य पिता अपि तस्यैव गृहस्य सेवकः आसीत् । बहुपूर्वमेव तस्य मरणं सञ्जातम् । अतः बाल्ये एव सोमशेखरः कष्टकार्ये संलग्नः । माता अपि पितुः मरणात् पूर्वमेव मृता । गुप्तधनस्य गृहस्य पृष्ठतः स्थिते लघुकुटीरे तस्य वासः ।

गुप्तधनः प्रतिमासं सोमशेखराय वेतनं ददाति स्म । भोजनं वस्त्रादिकं च गृहे एव लभ्यमानम् आसीत् इति कारणात् सोम-शेखरस्य वेतनं सर्वं कस्याञ्चन पेटिकायां सुरक्षितं स्थापितवान् सः ।

गुप्तधनस्य गृहजनानां सर्वेषाम् अपि आवश्यकताः सोमशेखरेण पूरणीयाः आसन् । अतः गृहे सः प्रमुखः आसीत् ।

कदाचित् प्रातः सोमशेखरः कूपात् जलम् उद्धृत्य यदा भाण्डं पूरयन् आसीत् तदा तत्र आगतः गुप्तधनः उक्तवान् – ''सोम ! इतोऽपि भवता क्षीरं न दुग्धम् । बालाः क्षीरं पातुम् इच्छन्तः रोदनं कुर्वन्तः सन्ति'' इति ।

तस्य एतत् वचनं श्रुत्वा सोमशेखरः खिन्नः । तथापि सः मुखेन तं खेदम् अप्रदर्शयन् उक्तवान् – ''श्रीमन् ! मम नाम सोमशेखरः इति । सोमः इति न । भवता एवम् आहूयते चेत् मम खेदः जायते'' इति ।

गुप्तधनः सोमशेखरस्य एतादृशं वचनं श्रुत्वा स्तब्धः अभवत् । गृहे सर्वेऽपि तं सोम इत्येव आह्वयन्ति स्म । 'एतावत्पर्यन्तम् एतेन किमपि न उक्तम् आसीत् । अद्य एतस्य मनःस्थितिः समीचीना नास्ति इति भाति' इति चिन्तितवान् गुप्तधनः ।

तथापि स्वाभिप्रायम् अप्रकटयन् सः उक्तवान् – ''इतः परम् अहं पूर्णेन नाम्ना एव आह्वयामि सोमशेखरमहोदय ! इदानीं क्षीरदोहनप्रयासः क्रियते किम् ?'' इति ।

अनेन सन्तुष्टः सोमशेखरः सोत्साहं क्षीरं दोग्धुं गतः । दोहनं कृत्वा क्षीरम् आनीतवान्

भामहः

सोमशेखरः । तदा गुप्तधनस्य माता तम् उक्तवती – ''सोम ! गृहे शाकाः न सन्ति । विपणिं गत्वा आनयतु'' इति ।

सोमशेखरः पुनः खिन्नः अभवत् । सः रूक्षेण स्वरेण – ''हुँ, धनं स्यूतं च ददातु'' इति उक्तवान् ।

तस्य व्यवहारं दृष्ट्वा गुप्तधनस्य माता निर्वचना अभवत् । एतत् सर्वं गुप्तधनः दूरे स्थित्वा पश्यन् आसीत् । सः अचिन्तयत् यत् सोमशेखरस्य व्यवहारे यत् परिवर्तनं जातमस्ति तत्र किमपि महत् कारणं स्यात् इति । तदारभ्य तत् कारणम् अन्वेष्टुं प्रयत्नशीलः जातः सः ।

तद्दिने रात्रौ गुप्तधनः यदा गृहं प्रत्यागतः तदा गृहजनाः सर्वे सुप्तवन्तः आसन् । सः सोमशेखरस्य कुटीरसमीपं गतः । सोमशेखरः किं कुर्वन् स्यात् इति द्रष्टुम् उत्सुकः सन् सः वातायने मुखं प्रसारितवान् । तस्मिन् समये सोमशेखरः तत्र कञ्चन वज्रहारं एकाग्र-चित्ततया पश्यन् आसीत् ।

अरण्ये काष्ठानि आनेतुं यदा गतं तदा काकस्य नीडस्य समीपे एकस्यां शाखायां लम्बमानः हारः दृष्टः आसीत् तेन । काकः हारं खाद्यं मत्वा आनीतवान् आसीत् । खाद्यं न इति ज्ञात्वा तं हारं शाखायां स्थापितवान् आसीत् सः । अतः सः हारः सोमशेखरेण प्राप्तः आसीत् । गुप्तधनः अवगतवान् यत् सोमशेखरे जातस्य परिवर्तनस्य कारणम् एषः वज्रहारः एव इति ।

कानिचन दिनानि अतीतानि । तस्मिन् वर्षे गुप्तधनस्य उद्याने कदलीफलानि प्रभूततया



प्रवृद्धानि । गुप्तधनः सोमशेखरम् उक्तवान् – ''सोमशेखरमहोदय ! एतानि कदली-फलानि विक्रेतुम् आवां सुगन्धिपुरीं गच्छाव किम् ?'' इति ।

सोमशेखरः सन्तोषेण एतत् अङ्गीकृतवान् । तद्दिने एव तौ उभौ अपि कदलीफलानि स्वीकृत्य प्रस्थितौ । कदलीफलानि विक्रीय प्रतिगन्तुं सिद्धः अभवत् गुप्तधनः । तदा सोमशेखरः उक्तवान् – ''श्रीमन् ! अहं विपण्यां किञ्चित् अटितुम् इच्छामि । अत्र कीदृशाः आपणाः सन्ति इति ज्ञातुम् इच्छामि'' इति ।

तदा गुप्तधनः – ''भवतु, भवान् विपण्याम् अटित्वा आगच्छतु । अहम् अत्रैव भवतः प्रतीक्षां करोमि'' इति उक्तवान् । तथैव गतः सोमशेखरः अर्धघण्टानन्तरं शिरः अवनमय्य

गुप्तधनस्य समीपम् आगतः । क्षीणस्वरेण सः उक्तवान् - ''श्रीमन्, इदानीं गच्छाव'' इति ।

''भवतः इच्छा यथा अस्ति तथैव भवतु सोमशेखरमहोदय'' इति उक्तवान् गुप्तधनः ।

तदा सोमशेखरः महता दैन्येन - ''अहं भवतः सेवकः अस्मि । भवतः गृहे एव जातः वर्धितः च अहम् । अतः मां कृपया सोम इत्येव आह्वयतु'' इति विनीतः सन् उक्तवान् ।

अर्धघण्टायां सोमशेखरे परिवर्तनं कथं जातम् इति गुप्तधनेन न ज्ञातम् । आश्चर्यचकितः सन् सः सोमशेखरं दृष्टवान् । गुप्तधनस्य आशयं ज्ञातवान् सोमशेखरः - ''श्रीमन् ! अहं क्षन्तव्यः । कञ्चन विषयम् अहं भवते निवेदयितुम् इच्छामि'' इति गुप्तधनम् उक्तवान् ।

गुप्तधनेन उक्तं - ''निःसङ्कोचं वदतु'' इति ।

''गते सप्ताहे मया एकः वज्रहारः प्राप्तः । तदा मयि अनेके स्वप्नाः जागरिताः - 'एतं हारं विक्रीय तेन धनेन गृहं क्षेत्रं च क्रीत्वा सुखेन जीवनं यापनीयम्' इति । तस्मात् मम चिन्तनमेव अन्यथा संवृत्तम् । अहं श्रीमान् इति मत्वा तं हारं विक्रेतुम् इदानीं गतः आसम् । किन्तु 'एषः हारः कृतकः' इति स्वर्णकारेण उक्तम् । 'एषः हारः कृतकः न' इति अहं वादं कृतवान् । तेन कुपितः सः मां सेवकैः सन्ताड्य बहिः निष्कासितवान्'' इति वदन् तं हारं दर्शितवान् ।

तं हारं सम्यक् परिशील्य गुप्तधनः उक्तवान् - ''भवान् सेवकः । परिश्रमेण यदि कार्यं करोति तर्हि भाग्यं भवन्तम् अन्विष्य आगच्छेत् । तदा वज्राणां हारः एव भवता क्रेतुं शक्यः । एतस्य हारस्य स्वामी कियद्दुःखितः स्यात् इति किञ्चित् चिन्तयतु । हारः यदा प्राप्तः तदा एव भवता सः हारः आरक्षकेभ्यः दातव्यः आसीत् । स्वपरिश्रमेण प्राप्तं धनमेव अस्माकम्, अन्यत् न । धने स्थिते अस्थिते चापि मनुष्यस्य व्यवहारः तु समुचितः एव भवेत् । तदा एव सः गौरवान्वितः प्रतिष्ठावान् च भवति'' इति ।

एतत् श्रुत्वा सोमशेखरः अङ्गीकारपूर्वकं शिरः चालितवान् ।





# साक्ष्यम्

वल्लभनगरं किञ्चन वाणिज्यकेन्द्रम् । विविधेभ्यः देशेभ्यः जनाः तत्र आगच्छन्ति स्म वाणिज्यार्थम् । कदाचित् कश्चन दक्षिणदेशीयः तत्र आगतः । तस्य समीपे पञ्चशतं रूप्यकाणि आसन् । सः आवश्यकानां वस्तूनां क्रयणाय विपण्याम् अटन् आसीत् ।

तस्मिन् समये काचित् महिला अकस्मात् आगत्य तस्य हस्ते विद्यमानं धनम् अपहृतवती, तम् उक्तवती च – ''मम रूप्यकाणाम् अपहरणं कृत्वा किं वाणिज्यं क्रियते भवता ?'' इति ।

एतया घटनया दक्षिणदेशीयः आश्चर्येण स्तब्धः । सः ताम् अवदत् – ''मया भवत्याः धनं कदा अपहृतम् ? भवत्या एव मम धनं बलात् स्वीकृतम्'' इति ।

तयोः विवादं श्रुत्वा जनाः तत्र सम्मिलिताः । कः असत्यं वदति इति निर्णेतुं न शक्तं तैः । अतः तत्र सम्मिलितेषु कश्चित् तौ अवदत् – ''किम् अत्र स्थित्वा विवादेन ? न्यायालयः अनतिदूरे एव अस्ति । तत्र गच्छाम तावत्'' इति ।

महिला एतत् अङ्गीकृत्य तेन दक्षिण-देशीयेन सह न्यायालयं गतवती । न्यायाधीशं दृष्ट्वा सा उक्तवती – ''एषः जनः विपण्यां मत्तः पञ्चशतं रूप्यकाणि बलात् वशीकृतवान् । तत् धनं प्रत्यर्पयितुं न इच्छति एषः । तानि रूप्यकाणि प्रतिदापयतु कृपया'' इति ।

प्रवृत्तं सर्वं श्रुत्वा न्यायाधीशः अपृच्छत् – ''किमत्र साक्ष्यं किमपि अस्ति ?'' इति ।

''न'' इति उक्तवती महिला ।

ततः न्यायाधीशः दक्षिणदेशीयम् अपृच्छत् – ''एतद्विषये किं भवान् किमपि वक्तुम् इच्छति ?'' इति ।

''महोदय ! कानिचन वस्तूनि क्रेतुम् अहम् अत्र आगतः । एषा महिला का इति मया न ज्ञायते । आगमनसमये मया पञ्चशतं रूप्यकाणि आनीतानि आसन् । एतत् धनं ममैव'' इति अवदत् सः दक्षिणदेशीयः ।

**पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा**

'महिला एव असत्यवादिनी' इति भावः न्यायाधीशस्य मनसि आगतः । वस्तुस्थितिं ज्ञातुं सः एकम् उपायं चिन्तितवान् । सः तं दक्षिणदेशीयम् अवदत् - ''भवतः वचनं विश्वासार्हं न इति भाति मम । अतः एतत् धनं तस्याः एव'' इति ।

सन्तुष्टा महिला धनं स्वीकृत्य ततः निर्गतवती ।

तस्याः निर्गमनस्य अनन्तरं न्यायाधीशः दक्षिणदेशीयम् अवदत् - ''भवान् ताम् अनुसृत्य गत्वा ततः धनग्रन्थिं वशीकरोतु । अग्रे किं करणीयम् इति अहं चिन्तयिष्यामि'' इति ।

न्यायाधीशस्य कथनस्य अनुगुणं सः दक्षिणदेशीयः ताम् अनुसरन् गतवान् । सः महिलातः धनग्रन्थिं स्वायत्तीकर्तुं पूर्णप्रयासं कृतवान् । तथापि तस्य प्रयासः विफलः । एतदभ्यन्तरे बहवः तत्र सम्मिलिताः ।

सा महिला न्यायाधीशसमीपम् आगत्य अवदत् - ''न्यायाधीशवर्य ! भवता यत् धनं दापितं तत् अपहर्तुम् इच्छति एषः । कृपया एषः दण्डनीयः'' इति ।

''किं भवती सत्यं वदति ? एषा घटना किं केनापि दृष्टा ?'' इति अपृच्छत् न्यायाधीशः ।

''अत्रत्याः सर्वे एतां घटनां दृष्टवन्तः एव । भवान् एतान् स्वयं प्रष्टुम् अर्हति'' इति जनान् दर्शयन्ती अवदत् महिला ।

''प्रश्नस्य न कापि आवश्यकता । किं सः पुरुषः भवतीतः धनं स्वीकर्तुं शक्तः ?'' इति अपृच्छत् न्यायाधीशः ।

''कथं शक्नुयात् सः ? मया बलात् धनग्रन्थिः गृहीतः आसीत् । अतः तस्य स्वायत्तीकरणे विफलः जातः सः'' इति साभिमानम् अवदत् महिला ।

''ममापि तथैव भासते । भवतीतः धनं वशीकर्तुं सामर्थ्यं नास्ति एतस्य पुरुषस्य । पूर्वतने प्रसङ्गे भवती उक्तवती आसीत् यत् एतेन धनं वशीकृतम् इति । भवती शक्तिमती, स च दुर्बलः । अतः भवतीतः सः धनं वशीकृतवान् इत्येतत् असम्भवम् । भवती एव असत्यवादिनी । अतः भवती धनग्रन्थिं तस्मै प्रत्यर्पयतु । पुनरपि एतादृशः प्रयासः यदि भवत्या क्रियेत तर्हि भवती कठोरतया दण्ड्येत'' इति अवदत् न्यायाधीशः ।



# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

अरण्ये प्राप्तः राजकुमारः एव इति जयानन्दः जानाति । सः तं शिशुं राजकुमारं राजचिह्नाङ्कित-पदकोपेतं हारं च शान्तिदेवभक्ताय दलपतये ददाति । शान्तिपुरस्य सिंहासनं वशीकृतवान् वीरसिंहः प्रतिवेशिराज्यस्य अमृतपुरस्य आक्रमणाय उद्युक्तः भवति । तस्य सैनिकाः नन्दिनीनद्याः प्रवाहेण नीयन्ते ।

चित्रम् - गान्धि-अय्यः

*अमृतपुरीयाः सैनिकाः नन्दिनीनद्याः अपरस्मिन् तीरे स्थित्वा शान्तिपुरसेनायाः विपदं पश्यन्ति ।*

*सैनिकाः अस्त्रशस्त्रादीनि च तीरं प्राप्नुवन्ति ।*

भवन्तः अस्मदर्थं दैवेन प्रेषिताः ।

कृपया साहाय्यं क्रियताम् ।

एषः अपायात् रक्षितः स्यादपि ।

किम् अवगुण्ठनधारी कश्चित् भवतोः रक्षणं कृतवान् ?

आं, महाराज ! मम तु भाति यत् ....

मम जामाता इतोऽपि जीवति इति भाति मम ।

वसन्तः अत्र जनानां मध्ये सञ्चारं कुर्वन् भवति । सः विशेषवार्ताम् आनीतवान् भवेत् अपि ।

वीरसिंहः पुनरपि सेनां प्रेषयेत् इति भाति मम । वसन्तः आक्रमणसम्भावनां ज्ञातुं शक्नुयात् कदाचित् ।

अहं यथाशक्ति प्रयासं करिष्यामि महाराज ।

अस्माभिः पुनः अपि अमृतपुरम् आक्रमणीयम् ।

एतदर्थं बहूनि आयुधानि आवश्यकानि

वयं चन्द्रगिरिराज्याय तण्डुलं दत्त्वा आयुधानि क्रेतुम् अर्हामः ।

कररूपेण तण्डुलस्य सङ्ग्रहाय वयं सैन्यबलस्यापि उपयोगं करवाम ।

महाराज ! भूस्वामिभिः निर्धनेभ्यः किमर्थं तण्डुल-वितरणं करणीयम् ?

वीरसिंहः, सेनपतिः अमरसिंहः च कररूपेण तण्डुलसङ्ग्रहाय मार्गं चिन्तयतः ।

सर्वे उत्पत्तेः अर्धभागं दद्युः । भूस्वामिनः तु ...

निश्चयेन द्विशखारीमितं दातुम् अर्हन्ति ।

ग्रामजनाः यावत् इच्छन्ति तावतः तण्डुलान् विक्रीणीते रघुनाथः ।

हेमे, अलं चिन्तया । धनम् अनन्तरं दीयताम् । सः अस्ति दयालुः ।

तण्डुलवितरणं स्थग्यताम् ।

आदौ राज्ञे करः अर्पणीयः ।

एषः नूतनः करः । तण्डुलं दत्त्वा शस्त्राणि क्रेष्यामः ।

मया तु करः इतः पूर्वं दत्तः एव ।


श्रीमन् ! अस्माकं तण्डुलाः न नीयन्ताम् ।
वयं बुभुक्षया मृताः भवेम ।
तेन न चिन्ता अस्माकम् ।
तण्डुलाः दत्तः चेत् शस्त्राणि प्राप्यन्ते ।


शान्तिपुरे वर्धिताः तण्डुलाः चन्द्रगिरिं प्रति किमर्थं प्रेष्यन्ते इति तु न ज्ञायते ।


श्रीमन् ! वयं साग्रहं निवेदयामः । तण्डुलाः इतः न नेतव्याः ।
अनुसरणं मा क्रियताम् । तण्डुलाः न प्रत्यर्प्यन्ते अस्माभिः ।


शकटाः पर्वतमार्गेण गन्तुम् उद्युक्ताः ।
कश्चन पाशः सैनिकप्रमुखम् आकर्षति ।
आक्रमणम्



दलपतिः भूमौ पतति ...
ग्रामजनाः सैनिकान् पराजेतुं समर्थाः भवन्ति ।
वयं भवतां हानिं न करिष्यामः । तण्डुलमात्रं नेष्यामः वयम् ।
तण्डुलान् नीत्वा भूस्वामिने धनं दीयताम् ।
कृपया मुच्यताम् । वयं तु नायकस्य आदेशपालकमात्राणि स्मः ।
न इदानीम् । ग्रामजनाः गृहं प्राप्नुवन्तु नाम ।
यः मरणदण्डनात् आत्मानं रक्षितवान् सः एव अयम् ?
वयं ग्रामरक्षकाय वार्तां प्रेषयामः । सः भवतां मोचनाय व्यवस्थां करिष्यति ।
अनुवर्तते

# सञ्चीयताम् इन्धनानिलः

मातुलान्याः गृहं गत्वा प्रत्यागतां वीणां पृष्टवती माता – "तत्र भवत्या सुखेन दिनानि यापितानि स्युः खलु ?" इति ।

तदा वीणा महता उत्साहेन उक्तवती – "आम् ! सन्तोष-मयानि आसन् तानि दिनानि । मया तत्र व्यञ्जनमुद्गान्नादीनां निर्माणं ज्ञातम् । सुप्रिया अहं च सम्भूय पाकं कुर्वः स्म" इति ।



तदा माता कुतूहलेन पृष्टवती – "भवत्या किम् अन्यत् ज्ञातं तत्र ?" इति ।

"इन्धनानिलस्य सञ्चयः कथम् इति मया तत्र ज्ञातम् । सर्वाणि वस्तूनि सज्जीकृत्य एव पाकारम्भः करणीयः, शीतके स्थापितं वस्तु पर्याप्ततया पूर्वम् एव बहिः आनीय तत् यदा प्रकोष्ठोष्णतायुक्तं भवति तदा एव उष्णी-करणीयम् इत्यादिकं मया ज्ञातम्" इति साभिमानम् उक्तवती वीणा ।

सर्वं श्रुत्वा माता – "इतोऽपि द्वित्राः अंशाः अवधातव्याः एतद्विषये" इति उक्त्वा पुत्रीं पाकशालां नीत्वा दैनन्दिनोपयोगीनि पात्राणि दर्शितवती । तानि सर्वाणि विशालतलानि आसन् नात्युन्नतानि च । तानि दर्शयित्वा माता उक्तवती – "एतादृशानां पात्राणाम् उपयोगतः ज्वाला सर्वत्र प्रसृता भवति । तस्मात् उष्णांशस्य व्यर्थता न भवति । बाष्पस्थाल्यां पाकः तु मित-व्ययकरः । यः पाकः बाष्प-स्थाल्या कर्तुं न शक्यः तस्य निमित्तम् एतादृशानि विशाल-तलोपेतानि पात्राणि उप-योक्तव्यानि । उष्णीकरण-समये पात्रस्योपरि आवरणं स्यादेव । तस्मात् उष्णांशस्य व्यर्थता निवारिता भवेत्" इति ।

"उत्तमाः अंशाः एते" इति उक्तवती वीणा ।

"यदा क्वथनस्य आरम्भः भवति तदा ज्वालायाः मन्दतासम्पादनतः अपि इन्धन-सञ्चयः शक्यः । अन्यच्च, 'बर्नर्' लघु स्यात्, न तु बृहत् । तस्मात् अपि इन्धनस्य मितोपयोगः सम्भवति । 'बर्नर्' सर्वदा स्वच्छं स्यात् । तस्मात् अनिलस्य सञ्चारः निर्बाधः भवेत्" इति विवृतवती माता ।

"अहो, अपूर्वं पाककलाशिक्षणम् एतत्" इति साश्चर्यम् उक्तवती वीणा ।

# पृच्छ्यं भवताम् पृच्छ्यं भवताम्

## भवदर्थकं विज्ञानम्

### भवतां ध्वनिः



स्वस्य ध्वनिः अनन्यसदृशः इति किं भवन्तः जानन्ति ? एकस्य ध्वनिः इव अन्यस्य न भवति । यमलयोः अपि ध्वनिः न समानः ।

यदा ध्वनिः उत्पद्यते तदा शतशः स्नायवः क्षणात्मके काले युगपत् एव कार्यं कुर्वन्ति । ध्वनिपेटिका असंख्यान् ध्वनीन् उत्पादयितुं समर्था । एषा मृद्वस्थ्ना निर्मिता भवति । एतस्य अन्तः पुटीकृतं तनु पटलयुगलं भवति । तयोः पटलयोः मध्ये वायुसञ्चाराय अवकाशः भवति ।

प्रौढानां पुरुषाणां ध्वनिः महिलानां ध्वनितः अपि गभीरं भवति । तत्र कारणं ध्वनिपेटिका । पुरुषाणां ध्वनिपेटिकायाः आवरणास्थि महिलायाः ध्वनिपेटिकायाः आवरणास्थितः अपि दृढं भवति ।

## परिसरवैचित्र्यम्

### ऊर्ध्वमूलः वृक्षः

'ऊर्ध्वमूलमधःशाखः' इति उपनिषत्सु कश्चन वृक्षः वर्ण्यते । किन्तु वस्तुतः अपि ऊर्ध्वमूलः इव दृश्यमानः कश्चन वृक्षः अस्ति इति किं भवन्तः जानन्ति ? एतस्य प्रकाण्डं तावत् विशालं भवति यत् तस्य अन्तः निर्मिते रिक्तावकाशे बहवः जनाः युगपत् एव स्थातुम् अर्हन्ति । एषः वृक्षः त्रिशताधिकवर्षेभ्यः पूर्वम् उत्पन्नः इति श्रूयते ।

एतस्य वृक्षस्य नाम बुवाबाबवृक्षः इति । आफ्रिकादेशे आस्ट्रेलियादेशे च एतज्जातीयाः वृक्षाः प्राप्यन्ते । एतस्य वृक्षस्य प्रकाण्डं जलभाण्डाकारकम् (ड्रम्-आकारकम्)। विस्तारः नवमीटरात्मकः(३० पादमितः), औन्नत्यं च १८मीटरात्मकं (६० पादमितम्) ।

एषः बुवाबाबवृक्षः विलक्षणतया दृश्यते । यदा एतस्मात् वृक्षात् पर्णानि पतितानि भवन्ति तदा शाखाः मूलानि इव दृश्यन्ते । अतः एषः वृक्षः 'ऊर्ध्वमूलः' इव भासते । वृक्षस्य प्रकाण्डं मसृणं कान्तियुक्तं च भवति । वृक्षस्य त्वक् श्वेतमिश्रितरक्ता । क्वचित् ताम्रवर्णीया अपि ।



## भवन्तः जानन्ति किम् ?

### कुञ्चिकाकथा

कुञ्चिकाः कथम् उत्पन्नाः इति किं भवन्तः जानन्ति ? तासाम् इतिहासः अपूर्वः । प्राचीनकालिकानां कुञ्चिकानाम् आकारः अद्यतनीयानाम् इव न आसीत् ।

अतिप्राचीना कुञ्चिका इजिप्टदेशे प्राप्ता । पञ्चसहस्रात् वर्षेभ्यः पूर्वं निर्मिता सा प्राचीनेषु अवशेषेषु उपलब्धा नैनूवेह्नामके प्राचीननगरस्थले । तत्सम्बद्धः तालः काष्ठनिर्मितः आसीत् । सः काष्ठार्गलात्मकः । तस्य अन्तः एकं



काष्ठफलकं भवति स्म । तस्य ऊर्ध्वभागे काष्ठमयम् आणिद्वयं भवति स्म । अन्तः निर्मितरन्ध्रे ते आणी स्वभारकारणतः तिष्ठतः स्म । कुञ्चिका यदा काष्ठफलकम् उन्नयति तदा आणिद्वयस्य उन्नयनात् तालः उद्घाट्यते स्म । यस्मिन् भागे अर्गलः योजितः भवति तस्मिन् भागे कार्यं करोति स्म इजिप्शियनुकुञ्चिका । ग्रीक्देशीया कुञ्चिका आकारेण भारेण च दुर्बला भवति स्म । रोमनुकुञ्चिका सर्वत्र नेतुं योग्या विविधाकारिका च भवति स्म ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### साधुसंन्यासिनः अधिकृत्य



१. सा राज्ञी का, या च वैभवजीवनं राज्यसम्पत्तिं च परित्यज्य भगवतः कृष्णस्य भक्ता जाता ?



२. आदिग्रन्थः सिक्खानां पवित्रः ग्रन्थः । तस्मिन् कस्य गुरोः उपदेशाः सन्ति ?



३. महाराष्ट्रे अहमदनगरसमीपे कश्चन साधुः अस्ति । सः हिन्दुभिः मुस्लिमैः च पूज्यते। तस्य नाम किम् ?



४. आदिशङ्कराचार्येण स्थापितेषु पञ्चसु मठेषु अन्यतमः तमिळुनाडुराज्ये अस्ति । कस्मिन् नगरे अस्ति सः ?



५. रामानुजाचार्येण स्थापितस्य मठस्य नाम किम् ?

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-
सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः
प्रेषयितुं शक्नुयुः ?







समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'एप्रिल्'मासस्य चित्रशीर्षिकाप्रेषिका -**

**डा॰ पि. नारायणन्**

उपभैषज्याधिकारी (आयुर्वेदः)
*शासकीयजिल्लास्थानचिकित्सालयः,*
*त्रिशिरःपुरी - ६२०० १७ (त.ना.)*

**पुरस्कृता शीर्षिका**





**कुर्वन्ति वस्त्राणि सचित्राणि ।**
**करोति रथ्यां सुचराम् ।**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. मीरा ।
२. गुरुनानकस्य ।
३. सायिबाबा, शिरडीस्थः ।
४. काञ्चीपुरे ।
५. अहोबिलमठः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

